तन्मते चतुःषष्टिचत्वारिंशत्रिंशद्विंशतिषोडशाशाः पञ्च ग्रासाः ॥

अथ रञ्जनम्[1] ।

तारकर्मण्यस्य न तथा प्रयोगो दृश्यते ॥

केवल निर्मलं ताम्र वापित दरदेन तु ।
कुरुते त्रिगुणं जीर्ण लाक्षारमनिभ रसम् ॥ २३२ ॥
गन्धकेन हत नागं जारयेत्कमलोदरे ।
एतस्य त्रिगुणे जीर्णे लाक्षाभो जायते रसः ॥ २३३ ॥

कमलोदरे ताम्रे । एतत्तु नागसंबधान्न रसायनकर्मणि । किंवा यथोक्तसिद्धबीजोपरि त्रिगुणताम्रोत्तारणादत्तु[2] तद्बीजं समजीर्णं सत् तन्त्रेणैव[3] रञ्जयति ॥

कुनटीहतकरिणा वा रविणा वा ताप्यगन्धकहतेन ।
दरदनिहतासिना वा निर्व्यूढं हेम तद्बीजम् ॥ २३४ ॥
बलिना व्यूढं केवलार्कमपि ॥
कुनटी मनःशिला, करिर्नागः, रविस्ताम्रं, असिर्लोहम् ॥

अथ तारबीजम्—

कुटिलं विमला तीक्ष्णं समं चूर्णं प्रकल्पयेत् ।
पुटितं पञ्चवारं तु तारे वाह्यं शनैर्धमेत् ।
यावद्दशगुणं तत्तु तारबीजं भवेच्छुभम् ॥ २३५ ॥

कुटिलं वङ्गः, विमला कास्यमाक्षिकं, तीक्ष्णं लोहम् ॥

सत्त्वं तालोद्भवं वङ्गं समं कृत्वा तु धामयेत् ।
तच्चूर्णं वाहयेत्तारे गुणान् यावत्तु षोडश ॥ २३६ ॥
प्रतिबीजमिदं श्रेष्ठं सूतकस्य तु बन्धनम् ।
जारणात्सारणाच्चैव सहस्रांशेन विध्यति ॥ २३७ ॥

---

१ 'रञ्जनवेधने' क । २ 'त्रिगुणताम्रजारणादत्तु तद्वय' ख । ३ 'स्वतन्त्रेणैव' ख ।

वङ्गाभ्रं वाहयेत्तारे गुणानि द्वादशैव तु ।
एतद्बीजे समे जीर्णे शतवेधी भवेद्रसः ॥ २३८ ॥

अथ हेमबीजम्—

नागाभ्र वाहयेद्धेम्नि द्वादशैव गुणानि च ।
प्रतिबीजमिद श्रेष्ठं पारदस्य तु बन्धनम् ॥ २३९ ॥
माक्षिकेण हत ताम्र तार वा रञ्जयेन्मुहुः ।
तं नागं वाहयेद्बीजे द्विषोडशगुणानि च ॥ २४० ॥
बीजमेतद्वर श्रेष्ठं नागबीज प्रकीर्तितम् ।
समचारितमात्रेण सहस्रांशेन विध्यति ॥ २४१ ॥

अथ रञ्जनार्थं सारणार्थं च तैलम् ।—

मञ्जिष्ठा किंशुक चैव खदिर रक्तचन्दनम् ।
करवीरं देवदारु सरलो रजनीद्वयम् ॥ २४२ ॥
अन्यानि रक्तपुष्पाणि पिष्ट्वा लाक्षारसेन तु ।
तैलं विपाचयेत्तेन कुर्याद्बीजादिरञ्जनम् ॥ २४३ ॥
द्विगुणं रक्तपुष्पाणा रक्तपीतगणस्य च ।
क्वाथं, चतुर्गुणं क्षीर, तैलमेक सुरेश्वरि ॥ २४४ ॥
ज्योतिष्मतीकरञ्जाक्षकटुतुम्बीसमुद्भवम् ।
पाटलाकाकतुण्ड्यम्बुमहाराष्ट्रीरसैः पृथक् ॥ २४५ ॥
भेकशूकरमेषाहिमत्स्यकूर्मजलौकसाम् ।
वसया चैकया युक्तं षोडशांशैः सुपेषितैः ॥ २४६ ॥
भूलतामलमाक्षीकद्वन्द्वमेलापकौषधैः ।
पाचितं गालितं चैव सारणातैलमुच्यते ॥ २४७ ॥

अत्र गन्धर्वतैलमपि रसहृदयस्वरसात् । अथ द्वन्द्वमेलापकौषधानि—'ऊर्णाटङ्कणगिरिजतुमहिषीकर्णाक्षिमलशक्रगोपकर्कटकाः' इति द्वन्द्वमेलापकौषधानि ॥

अथाऽपरम्—

यथाप्राप्तैः श्वेतपुष्पैर्नानावृक्षसमुद्भवैः ।
रसं चतुर्गुणं योज्यं कङ्गुणीतैलमन्यतः ॥ २४८ ॥
पचेत्तैलावशेषं तु तस्मिंस्तैले निषेचयेत् ।
द्रावितं तारबीजं तदेकविंशतिवारकम् ।
रञ्जितं जायते सम्यग्रसराजस्य रञ्जनम् ॥ २४९ ॥

अन्यच्च—

कुटिले बलमत्यधिकं रागस्तीक्ष्णे च पन्नगे स्नेहः ।
रागस्नेहबलानि तु कमले नित्यं प्रशंसन्ति ॥ २५० ॥
बलमास्तेऽभ्रकसत्त्वे जारणरागाः प्रतिष्ठितास्तीक्ष्णे ।
बन्धस्तु सारलोहे क्रामणमथ नागवङ्गगतम् ॥ २५१ ॥
क्रामति तीक्ष्णेन रसस्तीक्ष्णेन च जीर्यते ग्रासः ।
हेम्नो योनिस्तीक्ष्णं रागान् गृह्णाति तीक्ष्णेन ॥ २५२ ॥
तदपि च दरदेन हतं हत्वा वा माक्षिकेण रविसहितम् ।
वासितमपि वासनया घनवच्चार्यं च जार्यं च ॥ २५३ ॥

घनवदभ्रकवत् ॥

सर्वैरेभिर्लोहैर्माक्षिकमृदितैर्द्रुतैस्तथा गर्भे ।
बिडयोगेन च जीर्णे रसराजो बन्धमुपयाति ॥ २५४ ॥
निर्बीजे समजीर्णे पादोने षोडशांशतया ।
अर्धेन पादकनकं पादेनैकेन तुल्यकनकं च ॥ २५५ ॥

समादिजीर्णस्य सारणायोग्यत्वं शतादिवेधकत्वं च; इतो न्यूनजीर्णस्य पत्रलेपाधिकार एव । यथा—

---

१ 'शंसन्ति धातुविदः' इति रसहृदये पाठः । २ 'सारणमथ नागवङ्गाभ्याम्' इति रसहृदये पाठः । ३ 'माक्षिकनिहतैः' इति रसहृदये पाठः । ४ 'जीर्णैः' जीर्णो' ख । ५ 'निर्बीजं समजीर्णं पादैकेनैव षोडशांशेन । अर्धेन पादयोगं पादेनैकेन तुल्यकनकं च ॥' इति रसहृदये पाठः ।

अत्यम्लितमुद्वर्तिततारारिष्टादिपत्रमतिशुद्धम् ।
आलिप्य रसेन ततः क्रामणलिप्त पुटेषु विश्रान्तम् ॥ २५६
पुटः प्रायेण चूल्लिकाधस्तादस्य ॥
अर्धेन मिश्रयित्वा हेम्ना श्रेष्ठेन तद्दलं पुटितम् ।
क्षितिखगपटुरक्तमृदा वर्णपुटोऽयं ततो देयः ॥ २५७ ॥
अर्धेनेत्युपलक्षणम् । क्षितिखगः कासीसम् ॥ अन्यच्च—
रज्जुभिर्भेक[1]वङ्गेभैः स्तम्भयोः सार[2]लोहयोः ।
बध्यते रसवेतण्डो[3] युक्त्या श्रीगुरुदत्तया ॥ २५८ ॥
शिलाचतुष्कं गन्धेशौ काचकूप्या सुवर्णकृत् ।
कीलालायःकृतो योगः खटिकालेपनाधिकः ॥ २५९ ॥

मण्डूक[4]पारदशिलाबलयः समानाः
समर्दिताः क्षितिबिलेशयमन्त्रजिह्वैः[5] ।
यन्त्रोत्तमेन[6] गुरुभिः प्रतिपादितेन
स्वल्पैर्दिनैरिह पतन्ति न विस्मय-त्वम् ॥ २६० ॥

लोहं गन्धं टङ्कणं भ्रामयित्वा तेनोन्मिश्र भेकमावर्तयेत्तु ।
तालं कृत्वा तुर्यवङ्गान्तराले रूपस्यान्तस्तच्च सिद्धोक्तबीजे[7] २६१
लोहभेकि सिद्धमते तारभेकीति बीजद्वयम् ॥
द्रुतदर्दुरपूतिलोहसेकः[8] कुरुते हिङ्गुलखण्डपक्षखण्डम् ॥ २६२

१ भेको अभ्रक, इभो नाग । २ सारलोहयो स्वर्णरौप्ययो । ३ रसवेतण्डो रसमातङ्ग । ४ मण्डूको अभ्रकम् । ५ '–यन्त्रजिह्वै' क । क्षिति कासीस, बिलेशयो नाग, मन्त्रजिह्वोऽग्नि काञ्चनमित्यर्थ । ६ यन्त्रोत्तमेन भूधरयन्त्रेण । ७ गन्ध टङ्कण च भ्रामयित्वा समर्द्य, तेनोन्मिश्र लोह भेक (अभ्रक) च वह्नौ आवर्तयेत् द्रावयेत्, तत् 'लोहभेकि' नाम सिद्धबीजम् । तुर्यवङ्गान्तराले ताल कृत्वा (तालयोगेन वङ्ग हत्वेत्यर्थ) तद्वङ्ग रूप्यस्यान्तर्दद्यात्, तच्च रूप्य सिद्धोक्तबीजे (पूर्वोक्तबीजे) आवर्तयेत् । इद तु 'तारभेकि' नामसिद्धबीजम् । ८ दर्दुर अभ्रक, पूतिलोहौ नागवङ्गौ, तेषा मिलिताना द्रुताना सेको हिङ्गुलखण्डस्योपरि कृतश्चेत्तस्य पक्षखण्ड पक्षच्छेद करोति, हिङ्गुलभस्म जायते इत्यर्थ ।

शशिहेलिहिरण्यमूषिका ध्रुवमक्षीणधियामनेन लक्ष्मीम्[1] ।
इति सिद्धमते खोटः ॥

अत्रभेकादिशब्दा धातुवाचका इत्यल रहस्यप्रकाशेन ॥

गन्धतैलयुगला[2]ऽयसिम ये पूतिवारिवशमेष्यति[3] पिष्टी ।
तैलभेकबलिकल्पितपिष्टीसयमः[4] प्लवगपूत्यभिषेकैः ॥२६३॥

दरदस्यापि पिष्टीत्वेन गृहीतत्वात्पूर्वकर्मणि संबन्धः ॥
इति सिद्धमते खोटः ॥

अधोऽष्टाङ्गुलतश्चुल्ल्याः सिध्यन्ति सिकतावृताः ।
रसगन्धशिलासर्पाः पाकाद्यग्निविपक्त्रिमाः ॥ २६४ ॥

खोटान्तरम् ।—

साल्लूर[5]कुटिलार्कस्थरम्भापामार्गभसना ।
हस्तीव बध्यते वक्रलोहखण्डिकया रसः ॥ २६५ ॥

खोटान्तरम् ।—

भेकभास्करगन्धायोवङ्गस्य क्षारभसना ।
हस्तीव बध्यते लोहवक्रचक्रिकया रसः ॥ २६६ ॥

इति रञ्जनवेधनानि ॥

## अथ बाह्यद्रुतयः ।

एतास्तु केवलामारोटकमेव मिलिता निबध्नन्ति, फलमस्य कल्पप्रमितमायुः, किवा पूर्वोक्तग्रासक्रमजारिताः पूर्वोक्तफल-

---

१ शशि तार, हेलिरर्कस्ताम्र, हिरण्य स्वर्ण, एतेषा मूषिका ध्रुव लक्ष्मी करोति, तस्यामुपर्युक्तसेकेनेत्यर्थ । २ गन्धतैलयुगला गन्धतैलसहिता पिष्टी नाम दरद , पूतिवारिवशमेष्यति पूतिलोहौ यौ नागवङ्गौ तयोर्यद्वारि नाम द्रव तस्य वशमेष्यति वह्लावनुड्डयनेनेत्यर्थ । ३ 'वशमेति च' ख । ४ तैल भेकबलिभिर्मिलितै कल्पिता या दररूपा रसगन्धकयो पिष्टी, तस्या प्लवगपूत्य भिषेकै प्लवगो अभ्रक, पूतिलोहौ नागवङ्गौ, तेषा मिलिताना द्रुतानामभिषेकेन सयमो भवतीत्यर्थ । ५ 'माल्लूर'– क ।

प्रदा भवन्ति । उच्यते च—समजीर्णश्चाय शतवेधी, द्विगुणजीर्णः सहस्रवेधी, एवं लक्षायुतकोटिवेधी समनुकर्तव्यः, चतुःषष्टिगुणजीर्णस्तु धूमस्पर्शावलोकशब्दतोऽपि वि यति ॥

## अथ सारणोच्यते ।

अन्धमूषा तु कर्तव्या गोस्तनाकारसन्निभा ।
सैव छिद्रान्विता मन्दगम्भीरा सारणोचिता ॥ २६७ ॥

अस्यामेव मूषाया तत्तैल[1]मपगतकल्कविमलमापूर्य तस्मिन्न[2]धिकमूष्मात्मनि द्रुतबीजप्रक्षेपसमकालमेव समा[3]वर्तनीयः सूतवरः, तदनु सद्यो मूषाननमाच्छादनीयमेतत्तैलाक्तपटखण्डग्रन्थिबन्धेन, अरुणसितबीजाभ्याममुना सारणकर्मणा मिलितश्चेत्सारितः सम्यक् सयमितश्च विज्ञेयः, प्रतिसारितस्तु द्विगुणबीजेन, तद्वदनुसारितस्तु त्रिगुणबीजेन, अत्र त्रिविधायामेव सारणायामरुणसितकर्मणोः क्रामणार्थमीषत्पन्नगवङ्गौ विश्राणनीयाविति ॥

सारितो जारितश्चैव पुनः सारितजारितः ।
सप्तसङ्क(शृङ्ग)लिकायोगात्कोटिवेधी भवेद्रसः ॥ २६८ ॥

इत्यादीनि कर्माणि पुनः केवलमीश्वरानुग्रहसाध्यत्वान्न प्रपञ्चितानि ॥

([4]द्रुतयोऽपि न दृष्टास्ते शास्त्रे दृष्टा अपि ध्रुवम् ।
विना शम्भोः प्रसादेन न सिध्यन्ति कदाचन ॥ १ ॥)

## अथ क्रामणम् ।

शिलया निहतो नागो वङ्गं वा तालकेन शुद्धेन ।
क्रमशः पीते शुक्ले क्रामणमेतत्समुद्दिष्टम् ॥ २६९ ॥

---

१ तत्तैल सारणतैलम् । २ तस्मिन् सारणतैले, अधिकमूष्मात्मनि सम्यक् प्रतप्ते । ३ 'समावर्जनीय' ग । ४ अयं श्लोक ख पुस्तके नोपलभ्यते ।

पीते स्वर्णे, शुक्ले रूप्ये ॥

अथ खोटमार्गेण जारणवेधनरञ्जनानि।

खोटकं स्वर्णसंतुल्यं समावर्तं तु कारयेत्।
माक्षिकं कान्तपाषाणं शिला गन्धं समं समम् ॥ २७० ॥
भूनागैर्मर्दयेद्यामं वल्लमात्रं वटीकृतम्।
एषा बिडवटी ख्याता योज्या सर्वत्र जारणे ॥ २७१ ॥
दरदं माक्षिकं गन्धं राजावर्तं प्रवालकम्।
शिला तुत्थं च कङ्कुष्ठं समं चूर्णं प्रकल्पयेत् ॥ २७२ ॥
वर्गाभ्यां पीतरक्ताभ्यां कङ्गुणीतैलकैः सह।
भावयेद्दिवसान् पञ्च सूर्यतापे पुनः पुनः ॥ २७३ ॥
रञ्जितं मृतखोटं च कल्केनानेन संयुतम्।
वालुकाहण्डिमध्यस्थं शरावपुटमध्यगम् ॥ २७४ ॥
त्रिदिनं पाचयेच्चूल्ल्यां कल्को देयः पुनः पुनः।
रञ्जितो जायते सूतः शतवेधी न संशयः ॥ २७५ ॥
लोहं गन्धं टङ्कणं ध्मातमेतत्तुल्यं चूर्णैर्भानुभेकाहिवङ्गैः।
सूतं गन्धं सर्वसाम्येन कूप्यामीषत्साध्य चित्तं नो विसयस्व ॥

इति सिद्धमते कल्कः ॥

रसदरदताप्यगन्धकमनःशिलाभिः क्रमेण वृद्धाभिः।
पुटमृतशुल्बं तारे त्रिर्व्यूढं हेमकृष्टिरियम् ॥ २७७ ॥
अष्टानवतिभागं तु रूप्यमेकं च हाटकम्।
सूतैकेन च वेधः स्याच्छतांशविधिरीरितः ॥ २७८ ॥
चन्द्रस्यैकोनपञ्चाशत्तथा शुद्धस्य भास्वतः।
वह्निरेकः शम्भुरेकः शतांशविधिरीरितः ॥ २७९ ॥

द्वावेव रजतयोनिताम्रयोनित्वेनोपचर्येते; एवं सहस्रवेधादयो जारणबीजवशादनुसर्तव्याः ॥

---

१ चन्द्रस्य तारस्य, भास्वत ताम्रस्य, वह्नि स्वर्णं, शम्भु रस।

चत्वारः प्रतिवापाः सुलाक्षया मत्स्यपित्तभावितया ।
तारे वा शुल्बे वा ताराऽरिष्टेऽथवा कुष्टौ ॥ २८० ॥
तदनु क्रामणमृदितः[1] सिक्थकपरिवेष्टितो देयः ।
अतिविद्रुते च तस्मिन् वेध्योऽसौ कुन्तवेधेन ॥ २८१ ॥

तदनु सिद्धतैलेनाप्लाव्य भस्मावच्छादनपूर्वकमवतार्य स्वाङ्गशैत्यपर्यन्तमपेक्षितव्य इति ॥

विद्धं रसेन यद्द्रव्यं पक्षार्धं स्थापयेद्भुवि ।
तत आनीय नगरे विक्रीणीत विचक्षणः ॥ २८२ ॥

समर्पितः सैन्धवखण्डकोटरे[2] विधाय पिष्टिं सिकताख्यतस्थुषि ।
विशुद्धगन्धादिभिरीषदग्निना समस्तमश्नात्यशनीयमीशजः २८३

कर्षाष्टङ्कणकज्जलिहरिरथैर्गन्धस्य च द्वौ रजः
सिद्धाख्यं सकलैः कृतं पलमथ द्वित्रैरहोभिः शृतम् ।
भूयो गन्धमृतं चतुर्दशपुटैः स्यादिन्द्रगोपारुण
तत्तारे मधुना पुटेन धमनेनार्कच्छवीमीहते ॥ २८४ ॥

कर्षा इति बहुवचनात्त्रयः, त्रिधा पत्रलेपेनेति ज्ञेयम् ॥

इति सिद्धमते चूर्णकल्कः ॥

अथ रसचिन्तामणौ—

चत्वारः स्वर्जिकाभागा यवक्षारस्तथा पुनः ॥ २८५ ॥
क्षारिकालवणं दद्यात्तत्तथाविधमेव च ।
काकमाचीरसस्यान्तर्दीयते सर्वमेव तत् ॥ २८६ ॥
शुद्धपित्तलपत्राणि[3] सूक्ष्माणि पलयोर्द्वयोः ।
तप्ततप्तानि तान्यस्मिन् काकमाचीरसे क्षिपेत् ॥ २८७ ॥
एकविंशतिवाराणि तारता प्रतियान्ति च ।
एवं शुभ्राणि जायन्ते रूप्यान्यूनानि किंचन ॥ २८८ ॥

---

१ 'क्रमेण मृदित' ग । २ 'सैन्धवखण्डकोदरे' ख । ३ 'नष्टपित्तलपत्राणि' ख ।

आरं तारं समं कृत्वा मृतवङ्गं नियोजयेत् ।
एकादशविभागेन भवेत्तारं न संशयः ॥ २८९ ॥
एषा राजवती विद्या पुत्रस्यापि न कथ्यते ।

इति राजवतीविद्या ॥

पारदष्टङ्क एकः स्याद्द्विपलं पीतखर्परम् ॥ २९० ॥
मर्दयेत्सुदृढं तावद्रसो यावद्विलीयते ।
पुनर्जम्बीरनीरेण गुडेन च समन्वितम् ॥ २९१ ॥
शोषयेच्चातपे पिष्ट्वा श्लक्ष्णं कृत्वा च धार्यते ।
अर्कदुग्धस्य दातव्या भावनास्ता यथा तथा ॥ २९२ ॥
अस्य कल्कस्य सिद्धस्य भाग एकश्च टङ्कणः ।
ताम्रं भागत्रयं दत्त्वा धाम्यतामन्धमूषया ॥ २९३ ॥
सुवर्णं दिव्यतेजः स्यात्कुङ्कुमादतिरिच्यते ।

इति हेमवती विद्या ॥

शाकवृक्षस्य निर्यासं पलमात्रं समानयेत् ॥ २९४ ॥
शिग्रुबीजस्य चूर्णस्य रसेन परिमर्दयेत् ।
पलमात्रं च शुल्बस्य पत्रं सूक्ष्मं निधापयेत् ॥ २९५ ॥
बहुशो लेपितं कृत्वा घर्मं दत्त्वा पुनः पुनः ।
पश्चात्तद्धाम्यते पत्रं शुल्बं हेम प्रजायते ॥ २९६ ॥

इति हेमवती विद्या ॥

पारदः सीसको गन्धः कुनट्येतच्चतुष्टयम् ।
बीजपूराम्भसा पिष्ट्वा गाढं दिनचतुष्टयम् ॥ २९७ ॥
अथ सूक्ष्माणि पत्राणि तानि तारस्य लेपयेत् ।
बीजपूररसेनैतान्यतिमात्रेण तावता ॥ २९८ ॥
एकाधिका भवेत्पत्रभावना चात्र विंशतिः ।
विशोष्यावर्तयेत्तारं भवेत्तारस्य काञ्चनम् ॥ २९९ ॥

इति हेमवती ॥

---

१ 'चात्र' ग ।

पारदो दरदो हेममाक्षिको गन्धकः शिला ।
एतानि समभागानि काकमाचीरसेन च ॥ ३०० ॥
मर्दनीयानि गाढानि कारितव्यानि खल्वके ।
पीतपित्तलपत्राणि कृतसूक्ष्माणि तान्यथं ॥ ३०१ ॥
लेपितव्यानि चैतेन चूर्णेनाथ प्रयत्नतः ।
मध्यमस्तु पुटो देयः क्रियते चूर्णमुत्तमम् ॥ ३०२ ॥
पुनस्तारस्य भागैक चूर्ण भागद्वयं भवेत् ।
अध ऊर्ध्वमिदं दत्त्वा ध्माप्यते चैकतः कृतम् ॥ ३०३ ॥
भल्लाततैलमध्ये हि क्षिप्यते गालितं च तत् ।
एवं वारद्वय तार तत्तैले विनिवेशयेत् ॥ ३०४ ॥
पिञ्जराभं भवेत्तार समं हेमापि मेलयेत् ।
जायते कनकं रम्यं वर्णयुग्म विहाय तत् ॥ ३०५ ॥

इति हेमवती ॥

**अथ रसबन्धनविद्या ।**

भूलताशिखरीमूल वारिणा मर्दयेद्दृढम् ।
तल्लिम्पेन्मूषिकामध्ये तन्मध्ये निक्षिपेद्रसम् ॥ ३०६ ॥
पञ्चटङ्कप्रमाण, ता मूषामङ्गारके क्षिपेत् ।
एवं बद्धो भवेत्सूतो मूषान्तःस्थो दृढो भवेत् ॥ ३०७ ॥

अस्य फलम्—

मूषामध्यगतस्तिष्ठेन्मुखरोगविनाशनः ।
शरीरे क्रामिते सूते जरापलितजिन्नरः ॥ ३०८ ॥
स्तम्भयेच्छस्त्रसंघात कामोत्पादनकारकः ।
पुनर्नव वपुः कुर्यात्साधकस्य न संशयः ।
अतिकामो भवेन्मर्त्यो वलीपलितनाशनः ॥ ३०९ ॥

इति रसबन्धनम् ॥

---

१ 'नान्यथा' ग ।

अथान्यः प्रकारः—

पुष्पितमनोजमन्दिरमध्ये सूतो नियन्त्रितो युक्त्या।
बद्धो भवति कियद्भिर्दिवसैः पुष्पप्रभावेण ॥ ३१० ॥

इति रसबन्धनम् ॥

अथान्येऽपि बन्धभेदास्ते यथा—

पञ्चविंशतिसंख्याकान् रसबन्धान् प्रचक्ष्महे।
येन येन हि चाञ्चल्यं दुर्ग्रहत्वं विनश्यति ॥ ३११ ॥
रसराजस्य सम्प्रोक्तो बन्धनार्थो हि वार्तिकैः।
हठारोटौ तथाऽऽभासः क्रियाहीनश्च पिष्टिका ॥ ३१२ ॥
क्षारः खोटश्च पाटश्च कल्कबन्धश्च कज्जली।
सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः ॥ ३१३ ॥
शृङ्खलाद्रुतिबन्धौ च बालश्चैव कुमारकः।
तरुणश्च तथा वृद्धो मूर्तिबन्धस्तथाऽपरः ॥ ३१४ ॥
जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः ॥
महाबन्धाभिधश्चेति पञ्चविंशतिरीरिताः ॥ ३१५ ॥
केचिद्वदन्ति षड्विंशो जलौकाबन्धसंज्ञकः।
स तावन्नेष्यते देहे स्त्रीणां द्रावे प्रशस्यते ॥ ३१६ ॥

अन्यमते चत्वार एव बन्धाः, ते यथा—

पाटः खोटो जलौका च भस्म चापि[1] चतुर्थकम्।
बन्धश्चतुर्विधो ज्ञेयः सूतस्य भिषगुत्तमैः ॥ ३१७ ॥

अस्य लक्षणानि—

पाटः पर्पटिकाबन्धः पिष्टीबन्धस्तु खोटकः।
जलौका पङ्कबन्धः स्याद्रस भस्मनिभं भवेत् ॥ ३१८ ॥
सूतभस्म द्विधा ज्ञेयमूर्ध्वगं तलभस्म च।
ऊर्ध्वं सिन्दूरकर्पूररसावन्यदधो भवेत् ॥ ३१९ ॥

---

१ 'चात्र' ग।

अथ हठादीना लक्षणानि—

हठो रसः स विज्ञेयः सम्यक्शुद्धिविवर्जितः ।
स सेवितो नृणा कुर्यान्मृत्यु व्याधिसमुद्भवम् ॥ ३२० ॥
सुशोधितो रसः सम्यगारोट इति कथ्यते ।
स क्षेत्रीकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ॥ ३२१ ॥
पुटितो यो रसो याति योगं[1] त्यक्त्वा स्वभावताम् ।
भावितो मायुमूलाद्यैराभासो गुणवैकृती ॥ ३२२ ॥
असंशोधितलोहाद्यैः साधितो यो रसोत्तमः ।
क्रियाहीनः स विज्ञेयो विक्रिया यात्यपथ्यतः ॥ ३२३ ॥

तीव्रातपे गाढतराव[3]मर्दात्पिष्टी भवेत्सा नवनीतरूपा ।
ख्यातः स सूतः किल पिष्टिबद्धः संदीपनः पाचनकृद्विशेषात् ॥

शङ्खशुक्तिवराटाद्यैर्योऽसौ ससाधितो रसः ।
क्षारबद्धः परं दीप्तिपुष्टिकृच्छूलनाशनः ॥ ३२५ ॥
बद्धो यः स्फो(खो)टता याति ध्मातो ध्मातः क्षय व्रजेत् ।
खोटबद्धः स विज्ञेयः शीघ्र सर्वविषापहः ॥ ३२६ ॥
द्रुतकज्जलिका मोचापत्रके चिपिटीकृता ।
स पाटः पर्पटी सैव बद्धश्चाखिलरोगनुत् ॥ ३२७ ॥

मोचापत्र कदलीपत्रम् ॥

स्वेदाद्यैः साधितः सूतः कल्कत्व समुपागतः ।
कल्कबद्धः स विज्ञेयो योगोक्त[4]फलदायकः ॥ ३२८ ॥
कज्जली रस[5]गन्धोत्था सुश्लक्ष्णा कज्जलोपमा ।
तत्तद्योगेन सयुक्ता कज्जलीबन्ध उच्यते ॥ ३२९ ॥

भस्मीकृतो नश्यति वह्नियोगाद्रसः सजीवः खलु संप्रदिष्टः ।
संसेवितोऽसौ न करोति भस्मकार्य जराव्याधिविनाशन च३३०

१ 'योगयुक्त्या स्ववासनाम्' ग । २ 'धातुमूलाद्यै–' ग । ३ 'गाढतरे विमर्दात्' ग । ४ 'योगेन फलदायक ' क । ५ 'रसगन्धाभ्याम्' ग ।

जीर्णाभ्रको वा परिजीर्णगन्धो भस्मीकृतश्चाखिललोहमौलिः ।
निर्जीवनामा हि स भस्मसूतो निःशेषरोगान् विनिहन्ति वेगात्
रसस्तु पादांशसुवर्णजीर्णः पिष्टीकृतो गन्धकयोगतश्च ।
तुल्यांशगन्धैः पुटितः क्रमेण निर्बीजनामा सकलामयघ्नः३३२
बीजीकृतैरभ्रकसत्त्वहेमतारार्ककान्तैः परिजारितो यः ।
हतस्ततः षड्गुणगन्धकेन सबीजबद्धो विपुलप्रभावः ॥ ३३३ ॥

वज्रादिनिहतः सूतो हतसूतसमोऽपरः ।
शृङ्खलाबद्धसूतस्तु देहलोहविधायकः ।
चित्रप्रभावा वेगेन व्याप्तिं जानाति शङ्करः (?) ॥ ३३४ ॥

युक्तोऽपि बाह्यद्रुतिभिश्च सूतो बन्धं गतो वा भसितस्वरूपः ।
स राजिकापादमितो निहन्ति दुःसाध्यरोगान् द्रुतिबद्धनामा॥
समाभ्रजीर्णः शिवजस्तु बालः संसेवितो योगयुतो जवेन ।
रसायनो भाविगदापहश्च सोपद्रवारिष्टगदान्निहन्ति ॥ ३३६ ॥
हरोद्भवो यो द्विगुणाभ्रजीर्णः स स्यात्कुमारो मिततण्डुलोऽसौ।
त्रिसप्तरात्रैः खलु पापरोगसंघातघाती च रसायनं च ॥३३७॥
चतुर्गुणव्योमकृताशनो यो रसायनाग्र्यस्तरुणाभिधानः ।
स सप्तरात्रात्सकलामयघ्नो रसायनो वीर्यबलप्रदाता ॥ ३३८ ॥
यश्चाभ्रकं षड्गुणितं हि जीर्णः प्राप्ताग्निसख्यः स हि वृद्धनामा ।
देहे च लोहे च नियोजनीयः शिवादृते कोऽस्य गुणान् प्रवक्ति॥

यो दिव्यमूलिकाभिश्च कृतोऽत्यग्निसहो रसः ।
विनाऽभ्रजारणात् स स्यान्मूर्तिबद्धो महारसः ॥ ३४० ॥
अयं हि जार्यमाणस्तु नाग्निना क्षीयते रसः ।
योजितः सर्वरोगेषु निरौपमफलप्रदः ॥ ३४१ ॥
शिलातोयमुखैस्तोयैः सिद्धोऽसौ जलबन्धनात् ।
स जरारोगमृत्युघ्नः कल्पोक्तफलदायकः ॥ ३४२ ॥

---

१ शिलोदकवर्णनं रसार्णवे १२ पटले द्रष्टव्यम् ।

केवलो लोहयुक्तो वा ध्मातः स्याद्गुटिकाकृतिः ।
अक्षीणश्चाग्निबद्धोऽसौ खेचरत्वादिकृत्स हि ॥ ३४३ ॥
हेम्ना वा रजतेन वा सहचरो ध्मातो व्रजत्येकता-
मक्षीणो निबिडो गुरुश्च गुटिकाकारोऽतिदीप्तोज्ज्वलः ।
चूर्णत्वं पटुवत्प्रयाति निहतो घृष्टो न मुञ्चेन्मलं
निर्गन्धो द्रवति क्षणात्स हि महाबद्धाभिधानो रसः॥३४४
इति रसबन्धलक्षणम् ॥

अथ नित्यनाथेन रसमूर्च्छनमुक्तम् ।—
मेघनादवचाहिङ्गुलशुनैर्मर्दयेद्रसम् ।
नष्टपिष्टं तु तद्गोलं हिङ्गुना वेष्टयेद्बहिः ॥ ३४५ ॥
पचेल्लवणयन्त्रस्थं दिनैकं चण्डवह्निना ।
ऊर्ध्वलग्नं समादाय दृढवस्त्रेण बन्धयेत् ॥ ३४६ ॥
ऊर्ध्वाधो गन्धकं तुल्यं रसं दत्त्वाऽनले पचेत् ।
जीर्णे गन्धे पुनर्देयः षड्भिर्वारैः समः समः ॥
षड्गुणे गन्धके जीर्णे मूर्च्छितो रोगहा भवेत् ॥ ३४७॥ इति मूर्छितलक्षणम् ।—
कज्जलाभो यदा सूतो विहाय घनचापलम् ।
मूर्च्छितस्तु तदा ज्ञेयो नानावर्णोऽपि च क्वचित् ॥ ३४८ ॥
मूर्च्छितफलम् ।—
मारितं देहसिद्ध्यर्थं मूर्च्छितं व्याधिनाशने ।
रसभस्म क्वचिद्योगे देहार्थे मूर्च्छितं क्वचित् ॥ ३४९ ॥

## अथ रसभस्मीकरणम् ।

तत्रोर्ध्वभस्म यथा रससिन्दूराख्यम् ।—
सूतः पञ्चपलः स्वदोषरहितस्तत्तुल्यभागो बलि-
र्द्वौ टङ्कौ नवसादरस्य तुवरीकर्षश्च संमर्दितः ।

कूप्या काचभुवि स्थितश्च सिकतायन्त्रे त्रिभिर्वासरैः
पक्वो वह्निभिरुद्भवत्यरुणभाः सिन्दूरनामा रसः ॥३५०

रसराजलक्ष्म्या तु—

कूपी सप्तमृदंशुकैः परिवृता शुष्काऽत्र गन्धेश्वरौ
तुल्यौ तौ नवसारपादकलितौ समर्द्य तस्या न्यसेत्।
सा यन्त्रे सिकताख्यके तलबिले पक्त्वाऽर्कयाम हिम
भित्वा कुङ्कुमपिञ्जर रसवर भस्माददेद्वैद्यराट् ॥ ३५१॥

अन्यच्च—

पाके रुद्ध मुखं कूप्या नवसारेण जायते।
ततः श[1]लाकया कुर्यात्कूपिकानाशशान्तये ॥ ३५२ ॥
अनेन विधिना पाका यावन्तोऽस्य भवन्ति हि।
तावन्तो हि गुणोत्कर्षा जायन्ते रसभस्मनः ॥ ३५३ ॥

अन्यच्च—

भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य।
संमर्द्य गाढ सकल सुभाण्डे ता कज्जली काचकृते निदध्यात्॥
सं[2]वेष्ट्य मृत्कर्पटकैर्घटी ता मुखे सचूर्णा गुटिका च दत्त्वा।
क्रमाग्निना त्रीणि दिनानि पक्त्वा तां वालुकायन्त्रगता, ततः स्यात्
बन्धूकपुष्पारुणमीशजस्य भस्म प्रयोज्यं सकलामयेषु।
निजानुपानैर्मरणं जरा च निहन्ति व[3]ल्लक्रमसेवनेन ॥ ३५६ ॥

'गन्धस्य भागो नवसादरस्य' इति मुख्य. पाठः।'भागशब्दस्तु कर्षत्रयवाची' इति वृद्धाः। केचन पवनाशनशब्देन सीसकं व्याचक्षते, तत्तु धातुवादे उपयुज्यत इति ज्ञेयम्। आरुण्योत्पत्त्यै कूपीमुखे मुद्रा कार्या इति केचिद्वदन्ति, अन्ये तु मुद्रामदत्त्वैव रसभस्म सपादयन्ति; यथासंप्रदाय व्यवस्था ॥

---

१ शलाकया कुर्यादिति अग्नितप्तया शलाकया कूपीमुखनिरोधकनवसारादिनिरसन कुर्यादित्यर्थः। २ 'सरुध्य' क.। ३ 'वल्ल क्रमसेवनेन' ख।

अथानुपानानि—

वाते सक्षौद्रपिप्पल्यपि च कफरुजि त्र्यूषणं साग्निचूर्णं
पित्ते सैलं सितेन्दु व्रणवति तुवरागुग्गुलुश्चारुशुद्धः ।
चातुर्जातेन पुष्टौ हरनयनफला शाल्मलीपुष्पवृन्तं
किंवा कान्ताललाटाभरणमपि रसे स्यादनूपानमेतत् ३५७

अथ गुणाः—

अपहरति रोगवृन्दं दृढयति काय महद्बल कुरुते ।
शुक्रशतानि च सूते सिन्दूराख्यो रसः पुंसाम् ॥ ३५८ ॥
सरस्यायुर्नानागदगहनदावानलशिखा
पर वह्नेस्तेजो बलरुचिरतावल्लिमुदिरः ।
अपि प्रौढस्त्रीणामतुलबलहारी निधुवने
रसः सिन्दूराख्यः सकलरसराजो विजयते ॥३५९॥

मुदिरो मेघः ॥

कूष्माण्ड कर्कटी कोलं कलिङ्गं करमर्दकम् ।
करीर चेति षट्कादीन् वर्जयेद्रससेवकः ॥ ३६० ॥
यस्य रोगस्य यो योगस्तेनैव सह योजितः ।
रसेन्द्रो हरते व्याधीन्नरकुञ्जरवाजिनाम् ॥ ३६१ ॥

## अथ रसकर्पूरः ।

गैरिकतुवरीखटिकासैन्धवगडजं रजः कुडवम् ।
प्रत्येक दृढहण्ड्यामाधायास्योपरि रसः स्थाप्यः ॥ ३६२ ॥
कुडवमितोऽथ तदूर्ध्वं देया हण्डी तदास्यायतमुखी ।
अथ तत्सन्धेर्मुद्रां कृत्वा तदधो हुताशनो ज्वाल्यः ॥३६३
अर्मणषट्कप्रमितैर्दारुभिरनूनातिदुर्बलस्थूलैः ।
अग्निं क्रमेण दद्याद्गुरुदर्शितवर्त्मना द्विनिशम् ॥ ३६४ ॥
तदनु ततो यन्त्रवराद्युक्त्या कर्पूरसंनिभ सूतम् ।
आदाय काचकुम्भे निधाय नवसादरं दद्यात् ॥ ३६५ ॥

समर्द्य चाथ काष्ठैरर्धार्मणसमितैः पचेद्धस्रम्।
चुल्लीडमरुकमध्यं वितस्तिचतुरङ्गुलावकाश तु ॥ ३६६ ॥
कर्तव्य, क्रमदहनं तदधः प्रज्वालयेन्मध्यम्।
शशिधवलमुपरिलग्नं युक्त्या संगृह्य रक्षयेद्यत्नात् ॥ ३६७ ॥
वल्ल वल्लार्ध वा गुडेन जीर्णेन रोगिणे दद्यात्।
दुग्धोदन तु पथ्यं देयं तस्मै च ताम्बूलम् ॥ ३६८ ॥
हरति समस्तं रोग कर्पूराख्यो रसो नृणाम्।
फिरङ्गकरिकेसरी सकलकुष्ठकालानलो-
ऽखिलव्रणविनाशकृद्व्रणजगर्तपूर्तिप्रदः।
सुवर्णसमवर्णकृद्बलहुताशतेजस्करः
समस्तगदतस्करो रसपतिः स कर्पूरकः ॥ ३६९ ॥

नवसादर दद्यात् 'पारदाच्चतुर्थांश' इति शेषः। तुवरी फटकडी, गडं साभरिलवणं, शेषं स्पष्टम् ॥

अथ रसकर्पूरस्यापरो विधिः—

शुद्धसूतसम कुर्यात्प्रत्येक गैरिक सुधीः।
इष्टिका खटिका तद्वत्स्फटिका सिन्धुजन्म च ॥ ३७० ॥
वल्मीकं क्षारलवणं भाण्डरञ्जनमृत्तिकाम्।
सर्वाण्येतानि संचूर्ण्य वाससा परिशोधयेत् ॥ ३७१ ॥

सिन्धुजन्म सैन्धवं, वल्मीकं तज्जा मृत्, क्षारलवण खारियालोण, भाण्डरञ्जनमृत्तिका कुलालगृहे 'कावीस' इति नाम।

एभिश्चूर्णैर्युतं सूत यावद्यामं विमर्दयेत् ॥
तच्चूर्णसहित सूत स्थालीमध्ये परिक्षिपेत् ॥ ३७२ ॥
तस्या स्थाल्या मुखे स्थालीमपरा धारयेत्समाम्।
सवस्त्रकुट्टितमृदा मुद्रयेदुभयोर्मुखम् ॥ ३७३ ॥
संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत्।

सम्यग्विशोष्य मुद्रां तां स्थाली चूल्ह्यां निरोधयेत्॥३७४॥
अग्नि निरन्तर दद्याद्यावद्दिनचतुष्टयम् ।
अङ्गारोपरि तद्यन्त्रं रक्षेद्यत्नादहर्निशम् ॥ ३७५ ॥
शनैरुद्घाटयेद्यन्त्रमूर्ध्वस्थालीगतं रसम् ।
कर्पूरवत्सुविमलं गृह्णीयाद्गुणवत्तरम् ॥ ३७६ ॥
तं देवकुसुमचन्दनकस्तूरीकुङ्कुमैर्युक्तम् ।
खादन् हरति फिरङ्ग व्याधिं सोपद्रवं सपदि ॥ ३७७ ॥
विन्दति वह्नेर्दीप्तिं पुष्टिं वीर्यं बलं विपुलम् ।
रमयति रमणीशतक रसकर्पूरस्य सेवकः सततम् ॥३७८॥
इति रसकर्पूरः ॥

## अथ सिन्दूररसः ।

शुद्धसूतं तदर्धं तु शुद्धगन्धकमेव हि ।
तयोः कज्जलिकां कुर्याद्दिनमेकं विमर्दयेत् ॥ ३७९ ॥
मृत्कर्पटैर्विलिप्तायां कूप्यां कज्जलिकां क्षिपेत् ।
वालुकायन्त्रगा यावत्पचेद्दिनचतुष्टयम् ॥ ३८० ॥
गृह्णीयादूर्ध्वसंलग्न मिन्दूरसदृशं रसम् ।
इति सिन्दूररमः ॥

अथ रसचिन्तामणौ—
नागार्जुनीति विख्याता दुग्धिका क्षितिमण्डले ॥ ३८१ ॥
तया विमर्दयेत्सूतं दिनमेकं निरन्तरम् ।
काकमाचीरसैः कार्यं मर्दनं दोषनाशनम् ॥ ३८२ ॥
पारदं दशटङ्कं स्याद्दशटङ्क च गन्धकम् ।
नौसादरं च पादं स्यात्त्रयमेकत्र मर्दयेत् ॥ ३८३ ॥
काचस्य कूपके कृत्वा मुखं तस्य निरुध्य च ।
अष्टयामावधिर्यावत्तावत्सूतः प्रपच्यते ॥ ३८४ ॥
एवं निष्पद्यते साक्षात्तरुणादित्यसंनिभः ।

अरुणो भस्मसूताख्यः सर्वकार्यार्थसाधकः ॥ ३८५ ॥
प्रवालकोमलच्छायो नृणामत्यन्तवल्लभः ।
भक्षयेद्रक्तिकाः पञ्च मरिचेन समं रसम् ॥ ३८६ ॥
क्षुद्बोधकारकः प्रायः सद्यः कामाग्निदीपनः ।
ज्वरादिकानयं दोषान् संयोगान्नाशयत्यपि ॥ ३८७ ॥
येषु येषु प्रयोक्तव्यो रसो रोगेषु सत्वरम् ।
तांश्च तान्नाशयेच्छ्रेष्ठः समर्थो रसपार्थिवः ॥ ३८८ ॥
इति सिन्दूररसः ॥

## अथ रसस्य मारणविधिः ।

धूमसार रसं तूरी गन्धक नवसादरम् ।
यामैकं मर्दयेदम्लैर्भागं कृत्वा समं समम् ॥ ३८९ ॥
काचकूप्यां विनिक्षिप्य तां च मृद्वस्त्रमुद्रया ।
विलिप्य परितो वक्त्रे मुद्रां दत्त्वा विशोषयेत् ॥ ३९० ॥
अधःसच्छिद्रपिठरीमध्ये कूपी निवेशयेत् ।
पिठरीं वालुकापूरैर्भृत्वा चाकूपिकागलम् ॥ ३९१ ॥
निवेश्य चुल्ल्या तदधो वह्नि कुर्याच्छनैः शनैः ।
तस्मादप्यधिक किंचित्पावकं ज्वालयेत्क्रमात् ॥ ३९२ ॥
एवं द्वादशभिर्यामैर्म्रियते रस उत्तमः ।
स्फोटयेत्स्वाङ्गशीतं तदूर्ध्वगं गन्धकं त्यजेत् ॥ ३९३ ॥
अधःस्थं च मृतं सूत गृह्णीयात्तं तु मात्रया ।
यथोचितानुपानेन सर्वकर्मसु योजयेत् ॥ ३९४ ॥

अथान्यप्रकाराः—

काष्ठोदुम्बरिकादुग्धै रसं किंचिद्विमर्दयेत् ।
तद्दुग्धपिष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत् ॥ ३९५ ॥
क्षिप्त्वा तत्संपुटे सूतं तत्र मुद्रां प्रकल्पयेत् ।
धृत्वा तद्गोलकं प्राज्ञो मृन्मूषासंपुटेऽधिके ॥ ३९६ ॥

पचेद्गजपुटे तेन सूतको याति भस्मताम् ।

अथान्यप्रकारः—

अपामार्गस्य बीजानां मूषायुग्मं प्रकल्पयेत् ॥ ३९७ ॥
तत्संपुटे क्षिपेत्सूतं मलयूदुग्धमिश्रितम् ।

मलयूः काष्ठोदुम्बरिका ॥

द्रोणपुष्पीप्रसूनानि विडङ्गमरिमेदकः ॥ ३९८ ॥
एतच्चूर्णमधश्चोर्ध्वं दत्त्वा मुद्रां प्रदापयेत् ।
तद्गोलमन्धयेत्सम्यङमृण्मूषासंपुटे सुधीः ॥ ३९९ ॥
मुद्रां दत्त्वा शोषयित्वा ततो गजपुटे पचेत् ।
एकेनैव पुटेनैतत्सूतकं भस्म जायते ।
तत्प्रयोज्यं यथास्थाने यथामात्रं यथाविधि ॥ ४०० ॥

अथान्यप्रकारः—

नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भगः ।
मृण्मूषासंपुटे पक्वः सूतो यात्येव भस्मताम् ॥ ४०१ ॥

अन्यच्च —

पञ्चाङ्गीबर्बरीलिङ्गीद्रवैर्घस्त्रत्रयं रसः ।
मर्दितः पुटितो भस्म स्वर्णवर्णं प्रजायते ॥ ४०२ ॥

अथान्यप्रकारः—

सूतश्चतुष्पलमितः समशुद्धगन्धः
स्याद्धूमसारपिचुरेक इदं क्रमेण ।
संमर्दयेद्विमलदाडिमपुष्पतोयै-
र्घस्त्रं विमर्द्य सितसोमलमाषकेण ॥ ४०३ ॥

सितसोमलं 'शंखियासोमल' इति भाषा ॥

एतन्निधाय सकलं जलयन्त्रगर्भे
संमुद्र्य संधिमुदितेन पुरा क्रमेण ।

आपूर्य यन्त्रमुदकेन दिनानि चाष्टौ
वह्निं क्रमेण तदधो विदधीत विद्वान् ॥ ४०४ ॥
पश्चात्ततो जलमुदस्य रसं तलस्थ-
मादाय भाजनवरे सुभिषग्निदध्यात्।
संपूज्य शम्भुगिरिजागिरिजातनूजान्
दद्याच्छुभेऽहनि रसं वरमेकगुञ्जम् ॥ ४०५ ॥
ताम्बूलिकादलयुतं ससितं पयोऽनु
पीत्वाऽम्लमाषलवणै रहितं सदन्नम्।
अद्यात्कियन्त्यपि दिनानि ततो यथेच्छं
भक्ष्यं भजेदथ नरो विगतामयः स्यात् ॥ ४०६ ॥

अथ मृतसूतलक्षणम्—

अतेजा अगुरुः शुभ्रो लोहहाऽचञ्चलो रसः।
यदा नावर्तते वह्नौ नोर्ध्वं गच्छेत्तदा मृतः ॥ ४०७ ॥

अचञ्चल इति छेदः। तन्त्रान्तरेऽपि —

अगुरुरतेजाः शुभ्रो वह्निस्थायी स्थिरोऽधूमः।
हेमादिधातुभोक्ता तत्कर्ता स्यान्मृतः सूतः ॥ ४०८ ॥

अथ गुणाः—

रसायनं त्रिदोषघ्नो योगवाह्यतिशुक्रलः।
भस्मसूतोऽखिलातङ्कनाशनस्त्वनुपानतः ॥ ४०९ ॥

इति भस्मसूतगुणाः ॥

अथान्यन्मतम्।—

अङ्कोलस्य शिफावारिपिष्टं कल्के विमर्दयेत्।
सूतं गन्धकसंतुल्यं दिनान्ते तं निरोधयेत् ॥ ४१० ॥
पुटयेद्भूधरे यन्त्रे दिनान्ते स मृतो भवेत्।

अथान्यच्च।—

वटक्षीरेण सूताभ्रौ मर्दयेत्प्रहरद्वयम्।
पाचयेत्तस्य काष्ठेन भस्मीभवति तद्रसः ॥ ४११ ॥

अथान्यच्च ।—

कटुतुम्ब्युद्भवे कन्दे गर्भे नारीपयःप्लुतः ।
सप्तधा म्रियते सूतः स्वेदितो गोमयाग्निना ॥ ४१२ ॥

अथान्यच्च ।—

अपामार्गस्य बीजानि तथैरण्डं च चूर्णयेत् ।
तच्चूर्णं पारदे देयं मूषायामधरोत्तरम् ॥ ४१३ ॥
रुद्ध्वा पचेल्लघुपुटैश्चतुर्भिर्भस्मता व्रजेत् ।

अथान्यच्च ।—

खरमञ्जरिबीजान्वितपुष्पकबीजैः सुचूर्णितं कल्कम् ।
कृत्वा सूतं पुटयेद्दृढमूषायां भवेद्भस्म ॥ ४१४ ॥

अन्यच्च ।—

काकोदुम्बरिकाया दुग्धेन विभावितो हिङ्गुः ।
मर्दनपुटनविधानात्सूतं भस्मीकरोत्येव ॥ ४१५ ॥

इति भस्मसूतः ॥

## अथ जलौकाबन्धः ।

बालमध्यमवृद्धासु योज्या विज्ञाय तत्क्रमात् ।
नीरसानामपि नृणा योषा स्यात्संगमोत्सुका ॥ ४१६ ॥
बाल्ये चाष्टाङ्गुला योनौ यौवने च दशाङ्गुला ।
द्वादशैव प्रगल्भानां जलौका त्रिविधा मता ॥ ४१७ ॥

सा यथा ।—

मुनिपत्ररसश्चैव शाल्मलीवृन्तवारि च ।
जातीमूलस्य तोयं च शिंशपातोयसंयुतम् ॥ ४१८ ॥
श्लेष्मातकफलं चैव त्रिफलाचूर्णमेव च ।
कोकिलाक्षस्य चूर्णं च पारदं मर्दयेद्बुधः ॥ ४१९ ॥
जलौका जायते दिव्या रामाजनमनोहरा ।
सा योज्या कामना(का)ले तु कामयेत्कामिनी स्वयम् ४२०

सद्यः स्खलनमाप्नोति दुःसाध्याऽपि रतेऽङ्गना ।

इति जलौकाबन्धः ॥

### अथ खेचरीगुटी रसचिन्तामणौ ।

रसं टङ्कत्रयं शुद्धं कृष्णधत्तूरबीजजे ॥ ४२१ ॥
तैले पलद्वये खल्वे मर्दितं दिनसप्तकम् ।
तावद्यावद्भवेत्तस्य जलौकारूपमुत्तमम् ॥ ४२२ ॥
माषान्नपिष्टकेनादौ दृढसूत्रेण वेष्टयेत् ।
वर्ति कृत्वा ततो गाढं शोषयेद्रविणा च ताम् ॥ ४२३ ॥
दशप्रस्थमिते तैले सर्षपस्य विपाचयेत् ।
तैलक्षयो भवेद्यावत्तावत्साऽप्यवतार्यते ॥ ४२४ ॥
स्निग्धच्छाये निवेश्याथ शनैः सिद्धा च ता नयेत् ।
दुग्धेनापूर्यते कुम्भः शुभस्तत्र निवेशयेत् ॥ ४२५ ॥
विशोष्य सकलं दुग्धं गुटिका यदि तिष्ठति ।
बर्करस्य मुखे पश्चाद्गुटिकां तां प्रयच्छति ॥ ४२६ ॥
प्रविष्टा तन्मुखस्यान्तर्ज्वलमानेव तद्धृदि ।
व्याकुलं कुरुते कामं देहे स्वास्थ्यं न तस्य वै ॥ ४२७ ॥
उदरस्था यदा भूयात्तदाऽसौ म्रियते पशुः ।
स्वकीये वदने पश्चाद्धृत्वा शुभ्रा निरामयाम् ॥ ४२८ ॥
योजनानां शतं गच्छेदनायासेन साधकः ।
स्त्रीणा शतं तथा गच्छेच्छुक्रस्तम्भकरी मता ॥ ४२९ ॥
मुखस्थायामहो तस्यां प्रहारो नैव जायते ।
अन्येऽपि बहवो रोगा मुखस्था दन्तघातिनः ॥ ४३० ॥
जिह्वातालुगता ये ते कण्ठशालूककादयः ।
उपजिह्वा द्विजिह्वा स्यादधिजिह्वा सुदारुणा ॥ ४३१ ॥
सप्तषष्टिषु ये मध्ये, हृद्रोगाः पीनसादयः ।
तास्तांश्च नाशयत्येषा गुटिका नाम खेचरी ॥ ४३२ ॥

इति खेचरीगुटीबन्धः ॥

## अथ पारदसेवनविधिं व्याख्यास्यामः ।

क्षेत्रीकृतनिजदेहः कुर्वीत रसायनं मतिमान् ।
विधिना पथ्यविधानादमरदेहतुल्यदेहः स्यात् ॥ ४३३ ॥
अक्षेत्रीकरणे सति रसायनं यो नरः प्रयुञ्जीत ।
तस्य क्रामति न रसः सर्वाङ्गदोषकृद्भवति ॥ ४३४ ॥
अक्षेत्रीकरणे सूतोऽप्यमृतोऽपि विषं भवेत् ।
फलसिद्धिः कुतस्तस्य सुबीजस्योषरे यथा ॥ ४३५ ॥
कर्तव्यं क्षेत्रकरणं सर्वस्मिंश्च रसायने ।
नाक्षेत्रकरणादेवि किंचित्कुर्याद्रसायनम् ॥ ४३६ ॥

अथ नित्यनाथः—

पञ्चकर्म पुरा कृत्वा पश्चात्सकलदेहिनाम् ।
योजनीयो रसो दिव्यः शीघ्रं सिद्धिमवाप्नुयात् ॥ ४३७ ॥
नवज्वरेऽतिसारे च गर्भिण्यां बालवृद्धयोः ।
न कुर्यात्पञ्चकर्माणि रक्तस्रावं च दाहनम् ॥ ४३८ ॥
पाचनं स्नेहनं स्वेदं वमन रेचनं तथा ।
एतानि पञ्चकर्माणि ज्ञातव्यानि भिषग्वरैः ॥ ४३९ ॥
अमृतं च विषं प्रोक्तं शिवेन च रसायनम् ।
पञ्चकर्मभयत्रस्तैः सुकुमारैर्नरैरिह ।
रेचनान्ते इदं सेव्य सर्वदोषापनुत्तये ॥ ४४० ॥

अथान्यच्च ।—

स्निग्धस्विन्नविरिक्तं यन्नीरुजं सिद्धभेषजैः ।
एतत्क्षेत्रं समासेन रसबीजार्पणक्षमम् ॥ ४४१ ॥

स्निग्धं प्रातस्त्रिदिनं घृतसैन्धवपानेन, स्विन्नं वस्त्रादिपुटवह्निना, विरिक्तमिच्छाभेदिनाराचादिसेवनेन, पलाशबीजजन्तुघ्नगुडमोदकभक्षणेन कीटपातनमपि कर्तव्यं, सिद्धभेषजै-

नीरुजं संवत्सरमयनं वा परिशीलितैः शृङ्गाराभ्रकलक्ष्मीविलासाद्यभ्रसत्त्वप्रधानप्रयोगैरिति भावः ॥

उक्तं च ।—

मृताभ्रं भक्षयेन्मासमेकमादौ विचक्षणः ।
पश्चात्तं योजयेद्देहे क्षेत्रीकरणमिच्छतः ॥ ४४२ ॥
इति शुद्धो जातबलः शाल्योदनजाङ्गलादिमुद्गरसैः ।
क्षेत्रीकृतनिजदेहः कुर्वीत रसायनं मतिमान् ॥ ४४३ ॥
घनसत्त्वपादजीर्णोऽर्धकान्तजीर्णश्च तीक्ष्णजीर्णश्च ।
क्षेत्रीकरणाय रसः प्रयुज्यते भूय आरोटः ॥ ४४४ ॥
योऽग्निसहत्वं प्राप्तः सजातो हेमतारकर्ता च ।
बद्धो रसश्च भुक्तो विधिना सिद्धिप्रदो भवति ॥ ४४५ ॥

### अथ रसभक्षणकालः ।

प्रभाते भक्षयेत्सूतं पथ्यं यामद्वयाधिके ।
नोल्लङ्घयेत्त्रियामं तु मध्याह्ने चैव भोजयेत्[1] ॥ ४४६ ॥
ताम्बूलान्तर्गते सूते विड्बन्धो नैव जायते ।
सकणाममृतां भुक्त्वा मलबन्धे स्वपेन्निशि ॥ ४४७ ॥

अथ रसमात्राप्रमितिः—

वल्लमेकं नरेऽश्वे तु गद्याणैकं गजे द्वयम् ।
सर्वरोगविनाशार्थं भिषक् सूतं प्रयोजयेत् ॥ ४४८ ॥

मतान्तरम्—

घनसत्त्वकान्तकाञ्चीशङ्करतीक्ष्णाभ्रादिजीर्णस्य ।
सूतस्य गुञ्जवृद्ध्या माषकमात्रं परा मात्रा ॥ ४४९ ॥

शिवः—

गुञ्जामात्रं रसं देवि हेमजीर्णं तु भक्षयेत् ।
द्विगुणं तारजीर्णस्य रविजीर्णस्य च त्रयम् ॥ ४५० ॥

---

१ 'नैव भोजयेत्' क ख ।

फलम् ।—

तीक्ष्णजीर्णस्य लक्षायुः पलमात्रस्य भक्षणात् ।
एवं दशपलं भुक्त्वा तीक्ष्णजीर्णस्य मानवः ॥ ४५१ ॥
तदा जीवेन्महाकल्पं प्रलयान्ते शिवं व्रजेत् ।
भस्मनः शुल्बजीर्णस्य लक्षायुः पलभक्षणात् ॥ ४५२ ॥
कोट्यायुर्ब्रह्म–आयुष्यं वैष्णवं रुद्रजीवितम् ।
द्वित्रिचतुःपञ्चषष्ठे महाकल्पायुरीश्वरः ॥ ४५३ ॥

अथ हेमजीर्णस्य फलम्—

भस्मनो हेमजीर्णस्य लक्षायुः पलभक्षणात् ।
विष्णुरुद्रशिवत्वं च द्वित्रिचतुर्भिराप्नुयात् ॥ ४५४ ॥

अस्यानुपानम् ।—

गुञ्जामात्रं हेमजीर्णं ज्ञात्वा चाग्निबलाबलम् ।
घृतेन मधुना चाद्यात्ताम्बूलं कामिनी व्रजेत् ॥ ४५५ ॥
एको दोषो हि सूक्ष्मोऽस्ति भक्षिते भस्मसूतके ।
त्रिसप्ताहाद्वरारोहे कामान्धो जायते नरः ॥ ४५६ ॥
नारीसंगाद्विना देवि अजीर्णं तस्य जायते ।
मैथुनाच्चलिते शुक्रे जायते प्राणसंशयः ॥ ४५७ ॥

तस्मादजीर्णशमनोपायमाह—

युवत्या जल्पनं कार्यं तावत्तन्मैथुनं त्यजेत् ।
लघुतां शेफसो ज्ञात्वा पश्चाद्गच्छन् सुखी भवेत् ॥ ४५८ ॥
ब्रह्मचर्येण वा योगी सदा सेवेत सूतकम् ।
समाधिकरणं तस्य क्रामणं परमं मतम् ॥ ४५९ ॥

अथ रससेवनकर्तुराहारादिनियममाह—

अतिपानं चात्यशनमतिनिद्राऽतिजागरम् ।
स्त्रीणामतिप्रसङ्गं च आध्मानं च विवर्जयेत् ॥ ४६० ॥

अतिकोपं चातिहर्षमतिदुःखमतिस्पृहाम्।
शुष्कवादं जलक्रीडामतिचिन्ता च वर्जयेत्॥ ४६१॥
कूष्माण्डं कर्कटी चैव कारवेल्लं कलिङ्गकम्।
कुसुम्भिका च कर्कोटी कदली काकमाचिकाम्॥ ४६२॥
ककाराष्टकमेतद्धि वर्जयेद्रसभक्षकः।
पातकं च न कर्तव्यं पशुसङ्गं च वर्जयेत्॥ ४६३॥
चतुष्पथे न गन्तव्यं विण्मूत्रं न च लङ्घयेत्।
वराणा निन्दनं देवि स्त्रीणा निन्दा च वर्जयेत्॥ ४६४॥
सत्येन वचनं ब्रूयादप्रियं न वदेद्वचः।
कुलत्थानतसीतैलं तिलान्माषान्मसूरकान्॥ ४६५॥
कपोतान् काञ्जिकं चैव तक्रभक्त च वर्जयेत्।
हेमचन्द्रादयः प्राहुः कुक्कुटानपि वर्जयेत्॥ ४६६॥
कट्वम्लतिक्तलवणं पित्तल च विवर्जयेत्।
बदरं नारिकेलं च सहकारं सुवर्चलम्॥ ४६७॥
नारङ्गं काञ्चनारं च शोभाञ्जनमपि त्यजेत्।
न वादजल्पनं कुर्याद्दिवा चापि न पर्यटेत्॥ ४६८॥
नैवेद्यं नैव भुञ्जीत कर्पूरं वर्जयेत्सदा।
कुङ्कुमालेपनं वर्ज्य न स्वपेत्कुशलः क्षितौ॥ ४६९॥
न तु हन्यात्कुमारी च वातलानि च वर्जयेत्।
क्षुधार्तो नैव तिष्ठेत अजीर्णं नैव कारयेत्॥ ४७०॥
दिवारात्रं जपेन्मन्त्रं नासत्यवचनं वदेत्।
हितं दुग्धान्नमुद्गाज्यशाल्यन्नानि सदा ततः॥ ४७१॥
शाकं पौनर्नव देवि मेघनादं सवास्तुकम्।
सैन्धवं नागरं मुस्ता पद्ममूलानि भक्षयेत्॥ ४७२॥

---

१ 'मातुलानी' ग। मातुलानीं भङ्गाम्।

आत्मज्ञानं कथा पूजा शिवस्य च विशेषतः ।
एतास्तु समयान्भद्रे न लङ्घेद्रसभक्षणे ॥ ४७३ ॥

अथ रसवाग्भटे ।—

([१]साधितं पारदं शृङ्गदन्तवेण्वादिधारितम् ।
अर्चयित्वा यथाशक्ति देवगोब्राह्मणानपि ॥ ४७४ ॥
पर्णखण्डे धृतं सूतं जग्ध्वा तदनुपानतः ।
घृतसैन्धवधान्याकजीरकार्द्रकसंयुतम् ॥ ४७५ ॥
तण्डुलीयकधान्याकपटोलालाबुकादिकम् ।
कुस्तुम्बरी मरीचानि सैन्धवं समभागिकम् ॥ ४७६ ॥
व्यञ्जनार्थं कृतं भोज्ये रससेवक उत्तमम् ।)
गोधूमजीर्णशाल्यन्नं गव्य क्षीरं घृतं दधि ॥ ४७७ ॥
हंसोदकं मुद्गयूषः पथ्यवर्गः प्रकीर्तितः ।
बृहतीबिल्वकूष्माण्डं वेत्राग्रं कारवेल्लकम् ॥ ४७८ ॥
माषं मसूरं निष्पावान् कुलत्थ सर्षपास्तिलान् ।
बन्धनोद्वर्तनस्नानताम्रचूडसुरासवान् ॥ ४७९ ॥
आनूपमासधान्याम्ल भोजनं कदलीदले ।
कांस्ये च गुरु विष्टम्भी तीक्ष्णोष्णं च भृशं त्यजेत् ।
निषिद्धं वर्ज्यं मतिमान्विचित्ररसभुग्भवेत् ॥ ४८० ॥
स्रवति न यथा रसेन्द्रो न च नश्यति जाठरो वह्निः॥४८१

अथाज्ञानादशोधितपारदभक्षणे तद्विषशमनोपायमाह—

यद्यज्ञानात्कथमपि नागादिकलङ्कितो रसो भुक्तः ।
तत्स्रावणाय विज्ञः पिबेच्छिफा कारवेल्लिभवाम् ॥ ४८२ ॥

अथ रसाजीर्णे शमनोपायमाह—

रसाजीर्णे महाव्याधीन् लक्षयेद्भिषगुत्तमः ।
अभ्यङ्गमनिलक्षोभे तैलैर्नारायणादिभिः ॥ ४८३ ॥

---

१ () एतच्चिह्नान्तर्गत पाठ ख ग पुस्तकयोर्नोपलभ्यते ।

अरतौ शीततोयेन मस्तके परिषेचनम् ।
तृष्णाया नारिकेलाम्बु मुद्गयूषं सशर्करम् ॥ ४८४ ॥
उद्गारे सति दध्यन्न कृष्णजीरं ससैन्धवम् ।
कार्षिकं स्वर्जिकाक्षारं कारवेल्लीरसप्लुतम् ।
गोमूत्रसैन्धवयुत तस्य संस्रावणं परम् ॥ ४८५ ॥

तस्य रसाजीर्णस्य ॥

सिन्धुकर्कोटिगोमूत्रं कारवेल्लीरसप्लुतम् ।
सौवर्चलसमायुक्तं रसाजीर्णे पिबेन्नरः ॥ ४८६ ॥
शरपुङ्खां सुरदाली पटोलबीजं च काकमाची च ।
एतेषामेकतमं कथितमजीर्णे रसायने तु पिबेत् ॥ ४८७ ॥

हारीतं प्रत्यात्रेयः—

धान्यादीना च सर्वेषां यवगोधूमषष्टिकाः ।
नेष्टास्तु विदलाः सर्वे मुक्त्वा मुद्गास्तथाऽऽढकीम् ॥४८८॥

आज्यं स्नेहे मधुषु मधुरं चेक्षुजातं हि यत्स्यात्
श्रेष्ठं खण्डं बत वरसितं क्षारयुक्तं न तत्स्यात् ।
हिङ्गु श्रेष्ठं सकलसुरभौ सैन्धवं सिन्धुजेषु
रागे यूषाः प्रवररजनीसूरणार्द्रौ च कन्दे ॥ ४८९ ॥

अशुभं पत्रशाकं तु सर्वाणि द्विदलानि च ।
संस्कृतानि विधानेन न स्युर्दोषकराणि च ॥ ४९० ॥

केशादिजुष्टं कृतशीतमुष्णं शाकावरान्नैर्बहुलं महोष्णम् ।
निशोषितं यल्लवणाधिकं च संत्याज्यमन्नं रससेविभिस्तत् ४९१
तक्रं हितं स्नेहगतं तथा दधि गोक्षीरजातं सकलं हितं स्यात् ।
मुक्त्वा च तैलाम्बुसुरारनालं स्यादम्बुपानं न हितं रसायने ॥
तैलं च चित्रा गिरिजाभवं यत्सुस्वादहीनं शटितामदग्धम् ।
विनष्टदुग्धं त्वशुभं च सर्वं खादेत्कदाचिन्न रसायनी नरः४९२

पुष्पजातं फलं सर्वं मधुरं मांसशर्करम् ।
पाकयुक्तमशीर्णं[1] च श्रेष्ठमुक्तं रसायने ॥ ४९४ ॥
असिताया[2] सवत्सायाः प्राहुर्दुग्धं जलैः शृतम् ।
बलवृद्धिकरं वृष्यं श्रेष्ठमुक्तं रसायने ॥ ४९५ ॥
गव्यं सुदुग्धं सलिलार्धकेन संपाच्य तत्क्षीणजलं सुशीतम् ।
खण्डेन वा शर्करया समेतं रसेन्द्रभोक्ता प्रपिबेत्सदैव ॥४९६॥
दिव्यान्तरिक्षं धुनिजं[3] च कौपं स्वयंविशीर्णाद्रिशिलातलोद्भवम् ।
तडागजं सारसमौद्भिदं यत्तोयं मतं त्वष्टविधं मनोरमम् ॥४९७
अक्षारं स्वादु मृष्टं दिनमणिकिरणैर्वासरे तप्तमादौ
रात्रौ शीतांशुरोचिस्त्रिविधसुपवनान्दोलितं दोषहीनम् ।
कर्पूरै राजचम्पैरतिशयविमलैः पाटलैलासुपुष्पै-
स्त्वग्धान्यैर्वासितं यद्वरशिशिरजलं सूतसेवी पिबेत॥४९८॥
श्रीनारायणसञ्ज्ञकेन च बलातैलेन चान्येन वा
कार्यं मर्दनकोविदैः रसभुजा मल्लैः सदा मर्दनम् ।
चातुर्जातलवङ्गकुङ्कुमनिशामुस्तासुमांसीभवै-
श्चूर्णैर्भृष्टमसूरमुद्गयवजैरुद्वर्तनं कारयेत् ॥ ४९९ ॥
सौख्योष्णैः सलिलैर्द्रुतं रसभुजा स्नानं सुजीर्णेऽशने
वातं पित्तकफौ निहन्ति बलकृत्त्वग्वर्णकृद्बृंहणम् ।
रूपद्योतिकरं मनःप्रशमनं कामस्य संवर्धनं
नारीणां च मनोहरं श्रमहरं देहे रसक्रामणम् ॥ ५०० ॥

अथ देहसिद्धिदानन्यानपि रसेन्द्रप्रयोगान् व्याचक्ष्महे ।
श्लोकद्वयं तत्र प्रागध्येतव्यं मृतपरीक्षार्थं; यथा—

कचकचिति न दन्ताग्रे कुर्वन्ति समानि केतकीरजसा ।
योग्यानि हि प्रयोगे रसोपरसलोहचूर्णानि ॥ ५०१ ॥

---

१ 'पाकयुक्तमजीर्णं' ख । २ 'अकृष्णाया' ग । ३ धुनिजं नादेयम् ।

वल्मीक[1]कूपतरुतलरथ्यादेवालयश्मशानेषु ।
जाता विधिनाऽपि हृता ओषध्यः सिद्धिदा न स्युः ॥५०२

अथ सर्वप्रयोगयोग्यतया रसेन्द्रमारणाय शाम्भवीं मुद्राम-भिदध्मः—

अधस्ताप उपर्यापो मध्ये गन्धकपारदौ ।
यदि स्यात्सुदृढा मुद्रा मन्दभाग्योऽपि सिध्यति ॥ ५०३ ॥
यदि कार्यमयोयन्त्रं तदा तं मृत्स्नया दिहेत् ।
समे गन्धे तु रोगघ्नो द्विगुणे राजयक्ष्मजित् ॥ ५०४ ॥
जीर्णे गुणत्रये गन्धे कामिनीदर्पनाशनः ।
चतुर्गुणे तु तेजस्वी सर्वशास्त्रविशारदः ॥ ५०५ ॥
भवेत् पञ्चगुणे सिद्धः षड्गुणे मृत्युजिद्भवेत् ।

इत्याद्युक्तमेव ॥

भस्मसूतं द्विधा गन्धं शतं कन्याम्बुमर्दितम् ॥ ५०६ ॥
रुद्ध्वा लघुपुटे पच्यादुधृत्य मधुसर्पिषा ।
निष्कं खादेज्जरामृत्युं हन्ति गन्धामृतो रसः ॥ ५०७ ॥
समूलं भृङ्गराजं च छायाशुष्कं विचूर्णयेत् ।
तत्समं त्रिफलाचूर्णं सर्वतुल्या सिता भवेत् ॥ ५०८ ॥
पलैक भक्षयेच्चानु वर्षान्मृत्युजरापहः ।

इति गन्धामृतो रसः ॥

मृतसूतस्य पादांशं हेमभस्म प्रकल्पयेत् ॥ ५०९ ॥
क्षीराज्यमधुना मिश्रं माषैकं कान्तपात्रके ।
लेहयेन्मासषट्कं तु जरामृत्युविनाशनम् ॥ ५१० ॥
बाकुचीचूर्णकर्षैकं धात्रीफलरसप्लुतम् ।
अनुपानं लिहेन्नित्यं स्याद्रसो हेमसुन्दरः ॥ ५११ ॥

इति हेमसुन्दरो रसः ॥

---

१ 'वल्मीकानूप'–ग ।

बलिः सूतो निम्बूरसविमृदितो भस्मसिकता-
ह्वये यन्त्रे कृत्वा समरविकणाटङ्कणरजः ।
त्रिघस्रं लुङ्गाम्भोलवकदलितः क्षौद्रहविषाऽ-
वलिढो माषैक दरयति समस्त गदगणम् ॥ ५१२ ॥
जरां वर्षैकेन क्षपयति च पुष्टि वितनुते
तनौ तेजस्कारं रमयति वधूनामपि शतम् ।
रसः श्रीमान्मृत्युञ्जय इति गिरीशेन कथितः
प्रभावं को वाऽन्यः कथयितुमपारं प्रभवति ॥ ५१३ ॥

लुङ्गाम्भोलवकदलित इति मातुलुङ्गद्रवं कणशो दत्त्वा त्रिदिनं मर्दयेदित्यर्थः । इति मृत्युञ्जयो रसः ॥

शुद्धं रसं समविषं प्रहरं विमर्द्य
तद्गोलकं कनकचारुफले निधाय ।
दोलागत पच दिनं विषमुष्टितोये
प्रक्षाल्य तत्पुनरपीह तथा द्विवारम् ॥ ५१४ ॥
तत्सूतके गिरिशलोचनयुग्मगन्धं
युक्त्याऽवजार्य कुरु भस्मसमं च तस्य ।
वैक्रान्तभस्म जयपालनवांशकार्धं
सर्वैर्विषं द्विगुणितं मृदितं च खल्वे ॥ ५१५ ॥
घस्रत्रय कनकभृङ्गरसेन गाढ-
मावेश्य भाजनतले विषधूपभाजि ।
भृङ्गद्रवेण शिथिलं लघुकाचकूप्या-
मापूर्य रुद्धवसनं सिकताख्ययन्त्रे ॥ ५१६ ॥
तां वासरार्धमुपदीप्य निसर्गशीता
दृष्ट्वा विचूर्ण्य गदशालिषु शालिमात्रम् ।
आनन्दसूतमखिलामयकुम्भिसिंहं
गद्याणकार्धसितया सह देहि पश्चात् ॥ ५१७ ॥

रोगानुरूपमनुपानमपि प्रकाशं
क्षोणीभुजां प्रचुरपूजनमाप्नुहि त्वम्।
कीर्त्या दिशो धवलय स्फुरदिन्दुकान्त्या
वैद्येश्वरेति विरुदं भज वैद्यराज ॥ ५१८ ॥

तथा द्विवारमिति पूर्ववदखिलं द्विः कुर्यादिति भावः। गिरिशलोचनयुग्मेति षड्गुणगन्धकं, युक्त्येति काचकूप्यादौ ॥

इत्यानन्दसूतरसः ॥

सूत गन्ध कान्तपाषाणमिश्रं ब्राह्मैर्बीजैर्मर्दयेदेकघस्रम्।
गोलं कृत्वा टङ्कणेन प्रवेष्ट्य पश्चान्मृत्स्नागोमयाभ्या धमेत्तम्॥
शुष्के यन्त्रे सत्त्वपातप्रधाने किट्टे सूतो बद्धतामेति नूनम्।
बद्धं पश्चात्क्षारकाचप्रयोगाद्धेम्ना तुल्यं सूतमावर्तयेत्तु ॥ ५२० ॥
वक्रे खोटः स्थापितो वत्सरार्धं रोगान् सर्वान् हन्ति सौख्यं करोति।
यद्वा दुग्धे गोलकं पाचयित्वा दद्याद्दुग्धं पिप्पलीभिः क्षये तत् ॥
लौहे पात्रे पाचयित्वा तु देयं शुष्के पाण्डौ कामले पित्तरोगे।
वाते गोलं व्योषवातारितैले पक्त्वा तैलं गन्धयुक्तं ददीत५२२
भार्गीमुण्डीकासमर्दाटरूषद्रावैर्गोलं पाचयेच्छ्लेष्मनुत्त्यै।
कासे श्वासे तं च दद्यात्कषायं माध्वीकाक्तं पिप्पलीचूर्णयुक्तम्॥
यस्मिन् रोगे यः कषायोऽस्ति चोक्तस्तस्मिन्गोलं पाचयित्वा कषाये
दद्यात्तत्द्रोगनाशाय पथ्यं तत्तद्रोगे कीर्तितं यत्तदेव।
उक्तो गोलः प्राणिकल्पद्रुमोऽयं पूजा कृत्वा योजयेद्भक्तियोगात्॥

युक्त्या प्रागग्निसहत्वं कृत्वा पश्चाद्धमेदित्यर्थः ॥

इति प्राणिकल्पद्रुमगोलरसः ॥

रसगन्धकताम्राणि सिन्दुवाररसैर्दिनम्।
मर्दयेदातपे पश्चाद्वालुकायन्त्रमध्यगम् ॥ ५२५ ॥
रुद्ध्वा मूषागतं यामत्रयं तीव्राग्निना पचेत्।
तद्भुञ्जा सर्वरोगेषु पर्णखण्डिकया सह ॥ ५२६ ॥

दातव्या देहसिद्ध्यर्थं पुष्टिवीर्यबलाय च ।

सिन्दुवारो 'निर्गुण्डी' इति भाषा। इति त्रिनेत्ररसः ॥

रसस्य द्विगुणं गन्धं शुद्धं संमर्दयेद्दिनम् ॥ ५२७ ॥
प्रतिलोहं सूततुल्यमष्टलोहं मृतं क्षिपेत् ।
ब्राह्मी जयन्ती निर्गुण्डी विषमुष्टिः पुनर्नवा ॥ ५२८ ॥
नीलिका गिरिकर्ण्यर्ककृष्णधत्तूरकं यवाः ।
अटरूषः काकमाची द्रवैरासां विमर्दयेत् ॥ ५२९ ॥
गुञ्जात्रयं चतुष्कं वा सर्वरोगेषु योजयेत् ।
रोगोक्तमनुपानं वा कवोष्णं वा जलं पिबेत् ॥ ५३० ॥

अष्टलोहं स्वर्णादि । इति शार्दूलरसः ॥

सूतभस्म चतुर्भागं लोहभस्म तथाऽष्टकम् ।
मेघभस्म च षड्भागं शुद्धगन्धस्य पञ्चकम् ॥ ५३१ ॥
भावयेत्त्रिफलाक्काथैस्तत्सर्वं भृङ्गजद्रवैः ।
शिग्रुवह्निकटुक्यब्धिः सप्तधा भावयेत्पृथक् ॥ ५३२ ॥
सर्वतुल्या कणा योज्या गुडैर्मिश्रं पुरातनैः ।
निष्कमात्रं सदा खादेज्जरां मृत्युं निहन्त्यलम् ॥ ५३३ ॥
ब्रह्मायुः स्याच्चतुर्मासै रसोऽयममृतार्णवः ।
तिलं कोरण्टपत्राणि गुडेन भक्षयेदनु ॥ ५३४ ॥

कोरण्टः 'कण्टसैरेया' इति भाषा । इति अमृतार्णवरसः ॥

वृष्यगणचूर्णतुल्यं तत्पुटपक्कं सिताद्विगुणम् ।
वृष्यात्परमतिवृष्यं रसायनं चूर्णरत्नमिदम् ॥ ५३५ ॥

अथ शतावर्यादिवृष्यगणचूर्णमाह ।—शतावरी विदारी गोक्षुर इक्षुरको वानरी बला कृष्णश्वेता मुसली मिस्रीक्षुरकबीजान्यतिबला इति वृष्यगणः । अत्र गन्धमूर्च्छितं रसमभ्रादिकं च ददति दाक्षिणात्याः । इदं रसायनाख्यचूर्णरत्नं, अनुपेयं दुग्धादि ।

विषं त्रिकटुकं मुस्ता हरिद्रा निम्बपल्लवम् ।
विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम् ।
चणकाभा वटी कार्या योगवाही जयाभिधा ॥ ५३६ ॥
इति जयावटी ॥

गन्धं लोहं भस्म मध्वाज्ययुक्तं सेव्यं कर्षं वारिणा त्रैफलेन ।
शुभ्रे केशे कालिमा दिव्यदृष्टिः पुष्टिर्वीर्यं जायते गन्धलोहात् ॥
इति गन्धलोहम् ॥

अष्टांशहेमरजते शिखिमूषिकायां
संजार्य षड्गुणबलि क्रमशोऽधिकं च ।
ऊर्ध्वं पयोऽग्निमधरे विनिधाय धीराः
सिद्धिं समग्रमतुलां स्वकरे कुरुध्वम् ॥ ५३८ ॥

अष्टांशेत्युपलक्षणं, अधिकमपि शतगुणपर्यन्तम् ॥

रसगन्धकलोहाभ्रं समं सूताङ्घ्रि हेम च ।
सर्वं खल्वतले क्षिप्त्वा कन्यास्वरसमर्दितम् ॥ ५३९ ॥
एरण्डपत्रैरावेष्ट्य धान्यराशौ दिनत्रयम् ।
संस्थाप्य च तदुद्धृत्य सर्वरोगेषु योजयेत् ॥ ५४० ॥
एतद्रसायनवरं त्रिफलामधुसंयुतम् ।
तद्यथाग्निबलं खादेद्वलीपलितनाशनम् ॥ ५४१ ॥
क्षयमेकादशविधं कासं पञ्चविधं तथा ।
कुष्ठमष्टादशविधं पाण्डुरोगान् प्रमेहकान् ॥ ५४२ ॥
शूलं श्वासं च मन्दाग्निं हिक्कां चैवाम्लपित्तकम् ।
व्रणान् सर्वानाढ्यवातं विसर्पं विद्रधिं तथा ॥ ५४३ ॥
अपस्मारं ग्रहोन्मादान् सर्वार्शांसि त्वगामयान् ।
क्रमेण शीलितो हन्ति वृक्षमिन्द्राशनिर्यथा ॥ ५४४ ॥

पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारणम् ।
चतुर्मुखेन देवेन कृष्णात्रेयाय सूचितम् ॥ ५४५ ॥
इति चतुर्मुखरसः ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायमाधवविरचितायुर्वेद
प्रकाशे सूतसाधनाध्यायः प्रथमः समाप्तः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः ।

अथोपरसा कथ्यन्ते ।

गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोञ्जनं टङ्कणं
राजावर्तकचुम्बकौ च स्फटिका शङ्खः खटी गैरिकम् ।
कासीसं रसकं कपर्दसिकताबोलाश्च कङ्कुष्ठक
सौराष्ट्री च मता अमी उपरसाः सूतस्य किंचिद्गुणैः ॥
तुल्याः स्युर्यदि ते विशोध्य विधिना संसाधिताः सेविता-
स्तत्तद्रोगहरानुपानसहितैर्योगैश्चिरायुःप्रदाः ॥ १ ॥
अथादौ गन्धकोत्पत्ति प्रकारं शोधनस्य च ।
नामलक्षणसयुक्तं वक्तुमर्हसि शङ्कर ॥ २ ॥

ईश्वर उवाच ।—
श्वेतद्वीपे पुरा देवि तीरे क्षीरपयोनिधेः ।
क्रीडन्त्याः सखिभिः सार्धमभवत् प्रसृतं रजः ॥ ३ ॥
बहुलं तद्रजोऽतीव सुगन्धि सुमनोहरम् ।
क्षीरार्णवे तु स्नातायाः दुकूल रजसान्वितम् ॥ ४ ॥
धौतं यत् सखिभिस्तत्र तज्जात गन्धकं रजः ।
क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ॥ ५ ॥
निजगन्धेन तान् सर्वान् हर्षयन्[1] देवदानवान् ।
ततो देवगणैरुक्तं गन्धकाख्यो भवत्वयम् ॥ ६ ॥

---

१ 'हर्षयामास दानवान्' ग ।

रसस्य बन्धनार्थाय जारणाय भवत्वयम् ।
ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्त्विति ॥ ७ ॥
इत्ययं गन्धको नाम विख्यातः क्षितिमण्डले ।
बलिना सेवितः पूर्वं प्रभूतबलहेतवे ॥ ८ ॥
वासुकिं कर्षतस्तस्य तन्मुखज्वालया द्रुता ।
वसा गन्धकगन्धाढ्या सर्वतो निःसृता तनोः ॥ ९ ॥
गन्धकत्वं च संप्राप्ता तस्माद्बलिवसा स्मृता ।

### अथ गन्धकनामानि ।

गन्धको गन्धिकश्चापि गन्धपाषाण इत्यपि ।
सौगन्धिकश्च कथितो बलिर्बलिवसाऽपि च ॥ १० ॥

### अथ गन्धकस्वरूपम् ।

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः ।
रक्तो हेमक्रियासूक्तः शुकतुण्डनिभो वरः ॥ ११ ॥
पीतश्चामलसाराख्यः श्रेष्ठो रसरसायने ।
श्वेतोऽत्र खटिका प्रोक्ता लेपने लोहमारणे ।

लेपने व्रणादिलेपने॥ अथ शुद्धगन्धकगुणाः कथ्यन्ते—

दुर्लभः कृष्णवर्णश्च स जरामृत्युनाशनः ॥ १२ ॥
गन्धाश्माऽतिरसायनः समधुरो ह्युष्णो विपाके कटुः
कण्डूकुष्ठविसर्पदद्रुदलनः संदीपनः पाचनः ।
आमोन्मोचनशोषणो विषहरः सूतेन्द्रवीर्यप्रदो
गौरीपुष्पभवस्तथा कृमिहरः सत्त्वात्मकः सूतजित्॥१३

अन्यच्च—

गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः ।
पित्तलः कटुकः पाके कण्डुवीसर्पजन्तुजित् ।
हन्ति कुष्ठं क्षयं प्लीहकफवातान् रसायनः ॥ १४ ॥

अथ शोधितगन्धकगुणाः ।—

शुद्धो गन्धो हरेद्रोगान् कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्यवृद्धिं करोति हि ॥ १५ ॥

### अथाशोधितगन्धकदोषाः ।

अशुद्धगन्धः कुरुते च कुष्ठं ताप भ्रमं पित्तरुजं तथैव ।
रूपं सुखं वीर्यबलं निहन्ति तस्माद्विशुद्धो विनियोजनीयः ॥१६

### अथ गन्धकशोधनं कथ्यते ।

गन्धः सक्षीरभाण्डस्थो वस्त्रे कूर्मपुटाच्छुचिः ।
अथवा काञ्जिके तद्वत्सघृते शुद्धिमाप्नुयात् ॥ १७ ॥

### अथ शोधनयोग्यगन्धकलक्षणम् ।

शुकपिच्छसमच्छायो नवनीतसमप्रभः ।
मसृणः कठिणः स्निग्धः श्रेष्ठो गन्धक उच्यते ॥ १८ ॥

अथान्यमते शोधनम् ।—

लोहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् ।
तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ॥ १९ ॥
विद्रुतं गन्धकं ज्ञात्वा तनुवस्त्रे विनिक्षिपेत् ।
यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलः पतेत् ॥ २० ॥
शीतो निष्कासितो धौतो जलं वस्त्रेण शोषयेत् ।
एवं नैर्मल्यमापन्नो गन्धकः शुद्ध उच्यते ॥ २१ ॥
एवं वारत्रयं शोध्यो भिन्ने दुग्धे प्रयत्नतः ।
भक्षणार्थं हि भिषजा योगार्थं सकृदेव च ॥ २२ ॥

वस्त्रनिर्गालितशुद्धस्य प्रयोजनमाह वाग्भटः—

एवं संशोधितः सोऽयं पाषाणानम्बरे त्यजेत् ।
घृते विषं तुषाकारं स्वयं पिण्डत्वमेति च ॥ २३ ॥

अथास्य कूर्मपुटेन शोधनं विशदं यथा—

साज्यभाण्डे पयः क्षिप्त्वा मुखं वस्त्रेण बन्धयेत्।
गन्धकं पृष्ठदेशे तु श्लक्ष्णचूर्णितमर्पयेत्॥
छादयेत्पृथुदीर्घेण खर्परेणैव गन्धकम्॥ २४॥
सन्धिरोधः प्रकर्तव्यो भाण्डखर्परयोर्मृदा।
भाण्डं निक्षिप्य भूगर्ते किंचिद्रक्षेद्बहिर्मुखम्॥ २५॥
ज्वालयेत्खर्परस्योर्ध्वं जातवेदं वनोपलैः।
ततः क्षीरे द्रुतं गन्धं शीतं धौत जलेन तु॥ २६॥
वस्त्रघृष्टं निर्जलं तु शुद्धं योगेषु योजयेत्।

मतान्तरम्—

गन्धको द्रावितो भृङ्गरसे क्षिप्तो विशुध्यति।
सप्तधैवं भक्षणार्थं योगार्थं सकृदेव तु॥ २७॥
इति शुद्धो हि गन्धाश्मा नापथ्यैर्विकृतिं व्रजेत्।
अपथ्यादन्यथा हन्यात्पीतं हालाहलं यथा॥ २८॥

अथ गन्धककल्पार्थं गन्धकगन्धनाशनप्रकारः—

विचूर्ण्य गन्धक क्षीरे घनीभावावधि पचेत्।
ततः सूर्यावर्तरसं पुनर्दत्त्वा पचेच्छनैः॥ २९॥
पश्चाच्च पातयेत् प्राज्ञो जले त्रैफलसंभवे।
जहाति गन्धको गन्धं निज नास्तीह संशयः॥ ३०॥

### अथ गन्धकसेवनप्रकाराः।

इत्थं विशुद्धस्त्रिफलाज्यभृङ्गमध्वन्वितः शाणमितो हि लीढः।
गृध्राक्षितुल्यं कुरुतेऽक्षियुग्मं करोति रोगोज्झितदीर्घमायुः॥३१

अत्र पथ्यं तु दुग्धोदनम्। इति गन्धककल्पः॥

शुद्धो गन्धो निष्कमात्रः सदुग्धः सेव्यो मासं शौर्यवीर्यप्रवृद्ध्यै।
षण्मासात्स्यात्सर्वरोगप्रणाशो दिव्या दृष्टिर्दीर्घमायुः सुरूपम्॥३२

इति द्वितीयो गन्धककल्पः॥

अथ गन्धकतैलम् ।—

आवर्त्यमाने पयसि दद्याद्गन्धकज रजः ।
तज्जातदधिजं सर्पिर्गन्धतैलं नियच्छति ॥ ३२ ॥
गन्धतैल गलत्कुष्ठं हन्ति लेपाच्च भक्षणात् ।

चूर्णीकृत्य पलानि पञ्च नितरां गन्धाश्मनो यत्नत-
स्तच्चूर्णं त्रिगुणे तु मार्कवरसे छायाविशुष्कीकृतम् ।
यत्स्याच्चूर्णमथाभयामधुघृतं प्रत्येकमेषां पलं
वृद्धो यौवनमेति मासयुगल खादन्नरः प्रत्यहम् ॥३३॥

इति तृतीयो गन्धककल्पः ॥

यो गन्धाश्म विचूर्णितं पिबति ना तैलेन कर्षोन्मितं
नित्यं चोष्णजलावसेचनरतः काले यथा प्रत्यहम् ।
सप्ताहत्रितयान्निहन्ति सकलाः पामादिसर्वा रुजो
नित्याभ्यासवशाद्विनष्टसकलक्लेशोपतापः पुमान् ॥३४॥

इति चतुर्थो गन्धककल्पः ॥

यो वाऽप्युग्रमतिः सुचूर्णितमिदं गन्धाश्म कृष्णासमं
पथ्यातुल्यमपि प्रपूजितगुरुर्भूतेशपूजारतः ।
आहारादिषु यन्त्रणादिरहितः स्यात् पुष्टिवीर्याधिक.
प्रोत्फुल्लाम्बुजनेत्रयुग्मविलसच्चामीकराभासुरः ॥ ३५ ॥

इति पञ्चमो गन्धककल्पः ॥

कलाशव्योषसंयुक्तं शुद्धगन्धं विचूर्णितम् ।
अरत्निमात्रे वस्त्रे तद्विप्रकीर्य विवेष्टयेत् ॥ ३६ ॥
सूत्रेण वेष्टयित्वाऽथ यामं तैले निमज्जयेत् ।
धृत्वा संदंशतो वर्ति मध्ये प्रज्वालयेच्च ताम् ॥ ३७ ॥
द्रुतो निपतितो गन्धो बिन्दुशः काचभाजने ।
तां द्रुतिं प्रक्षिपेत्पत्रे नागवल्ल्यास्त्रिबिन्दुकाम् ॥ ३८ ॥

वल्लेन प्रमितं शुद्धं सूतेन्द्रं च विमर्दयेत् ।
अङ्गुल्या च सपत्रां तां द्रुतिं सूतं च भक्षयेत् ॥ ३९ ॥
करोति दीपनं तीव्रं क्षयं पाण्डुं च नाशयेत् ।
कासं श्वासं च शूलार्तिं ग्रहणीमपि दुर्धराम् ।
आमं विनाशयत्याशु[1] लघुत्वं प्रकरोति च ॥ ४० ॥

इति षष्ठो गन्धककल्पः ॥

अन्यच्च—

शुद्धो बलिर्गोपयसा त्रिवारं ततश्चतुर्जातगुडूचिकाद्भिः ।
पथ्याक्षधात्र्यौषधभृङ्गनीरैर्भाव्यो[2]ऽष्टवारं पृथगार्द्रकेण ॥ ४१ ॥
सिद्धे सितां योजय तुल्यभागां रसायनं गन्धकसंज्ञितं[3] स्यात् ।
धातुक्षयं मेहगणाग्निमान्द्यं शूलं तथा कोष्ठगतांश्च रोगान् ॥४२
कुष्ठान्यथाष्टादश रोगसंघान्निवारयत्येव च राजरोगम् ।
कर्षोन्मिते सेवित एति मर्त्यो वीर्यं च पुष्टिं बलमग्निदीप्तिम्॥४३

वमनै रेचनैः पूर्वं देहशुद्धिः समाचरेत् ।
जाङ्गलानि तु मांसानि छागलानि प्रयोजयेत् ॥ ४४ ॥
लवणाम्लानि शाकानि द्विदलानि तथैव च ।
स्त्रियश्चारोहणं यानं सदा चैतानि वर्जयेत् ॥ ४५ ॥

इति सप्तमः सर्वोत्तमो गन्धकरसायनकल्पः ॥

वातारितैलसंयुक्तस्त्रिफलाकौशिकेन तु ।
गन्धको रससंयुक्तो जराव्याधिविनाशनः ॥ ४६ ॥
मासमात्रप्रयोगेन शृणु वक्ष्यामि तद्गुणान् ।
अर्शो भगन्दरश्चैव तथा श्लेष्मसमुद्भवाः ॥ ४७ ॥
नश्यन्ति व्याधयः सर्वे मासेनैकेन गन्धकात् ।
षण्मासस्य प्रयोगेण देवतुल्यो भवेन्नरः ॥ ४८ ॥

---

१ 'विशोषयत्याशु' ग । २ 'विभाव्य' ग । ३ 'गन्धकसञ्ज्ञक' ग ।

हंसवर्णाश्च ये केशा वलिश्चैव प्रलम्बिनी ।
चला दन्ता मन्ददृष्टिर्बलशुक्रादिसंक्षयः ॥ ४९ ॥
निर्जित्य यौवनं याति भ्रमरा इव मूर्धजाः ।
दिव्यदृष्टिर्महाप्राणो वराह इव कर्णयोः ॥ ५० ॥
चक्षुषा तार्क्ष्यतुल्योऽसौ बलेन बलविक्रमः ।
दृढदन्तो वज्रकायो द्वितीय इव शङ्करः ।
तस्य मूत्रपुरीषेण शुल्ब भवति काञ्चनम् ॥ ५१ ॥

इत्यष्टमो गन्धककल्पः ॥

गन्धकस्य पल चैकं रसस्यार्धपल तथा ।
कुमारीरससंघृष्ट दिनैक गोलकीकृतम् ॥ ५२ ॥
अन्धमूषाधृतं ध्मात लेहयेन्मधुसर्पिषा ।
मासमात्रप्रयोगेण जरादारिद्र्यनाशनम् ॥ ५३ ॥

इति नवमो गन्धककल्पः ॥

त्रिफला गन्धक भृङ्गं समभागानि कारयेत् ।
संवत्सरप्रयोगेण जीवेच्चन्द्रार्कतारकम् ॥ ५४ ॥

इति दशमो गन्धककल्पः ॥

गन्धकस्य पल चैक पिबेत्क्षीरेण संयुतम् ।
संवत्सरप्रयोगेण जीवेच्चन्द्रार्कतारकम् ।
अवध्यः सर्वभूताना द्वितीय इव शङ्करः ॥ ५५ ॥

इत्येकादशो गन्धककल्पः ॥

अर्कक्षीरैः स्नुहीक्षीरैर्वस्त्रं लेप्यं तु सप्तधा ।
गन्धक नवनीतेन पिष्ट्वा लिम्पेच्च वस्त्रके ॥ ५६ ॥
तद्वर्तिर्ज्वलिता दंशधृता धार्या त्वधोमुखी ।
तैलं पतत्यधोभाण्डे ग्राह्यं योगेषु योजयेत् ॥ ५७ ॥

इति गन्धकतैलम् ॥

---

१ 'व्यासये' ख ।

गन्धकस्तुल्यमरिचः षड्गुणत्रिफलान्वितः।
शम्याकमूलजरसैर्मर्दितोऽखिलरोगहा ॥ ५८ ॥

इति द्वादशो गन्धककल्पः ॥

शम्याकमूलस्वरसैः संघृष्टो गन्धकोत्तमः।
लिप्तो देहे ध्रुवं खर्जूकुष्ठपामादिनाशनः ॥ ५९ ॥

इति कण्डूत्या त्रयोदशो गन्धककल्पः ॥

द्विनिष्कप्रमितो गन्धः पीतस्तैलेन शोधितः।
पश्चान्मरिचतैलाभ्यामपामार्गजलेन च ॥ ६० ॥
पेषयित्वा बलिः सर्वदेहे लिप्तः प्रयत्नतः।
घर्मे तिष्ठेत्ततो रोगी मध्याह्ने तक्रभक्तकम् ॥ ६१ ॥
भुञ्जीत रात्रौ सेवेत वह्निं प्रातः समुत्थितः।
महिषीच्छगणैर्देहं संलिप्य स्नानमाचरेत्।
शीतोदकेन पामादिखर्जूकुष्ठं प्रशाम्यति ॥ ६२ ॥

इति पामाखर्जूकुष्ठादौ चतुर्दशो गन्धककल्पः ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायश्रीमाधवविरचितायुर्वेदप्रकाशे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः।

### अथ हिङ्गुलस्य नामलक्षणगुणोत्पत्तिशोधनानि।

हिङ्गुलं दरदं म्लेच्छं हिङ्गुलश्चूर्णपारदम्।
सुरङ्गं रसगर्भं च बर्बरं रक्तमप्यथ ॥ १ ॥
दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः।
हंसपादस्तृतीयः स्याद्गुणवानुत्तरोत्तरः ॥ २ ॥
चर्मारः शुक्लवर्णः स्यात्सपीतः शुकतुण्डकः।
जपाकुसुमसंकाशो हंसपादो महोत्तमः ॥ ३ ॥

गुणाः—

तिक्त कषाय कटु हिङ्गुलं स्यान्नेत्रामयघ्न कफपित्तहारि ।
हृल्लासकुष्ठज्वरकामलाश्च प्लीहामवातौ च गरं निहन्ति॥ ४ ॥

अथाशुद्धदरदस्य दोषाः—

अशुद्धो दरदः कुर्यादान्ध्यं क्षैण्य क्लम भ्रमम् ।
मोह मेहं च संशोध्यस्तस्माद्वैद्यैस्तु हिङ्गुलः ॥ ५ ॥

अथ हिङ्गुलशोधनम् ।—

मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् ।
सप्तवार प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ ६ ॥

वाग्भटः—

सप्तकृत्वाऽऽर्द्रकद्रावैर्लकुचस्याम्बुनाऽपि वा ।
शोषितो भावयित्वा च निर्दोषो जायते खलु ॥ ७ ॥

अथ मारणम्—हिङ्गुलं तनुवस्त्रकञ्चुकगत[१] कृत्वा पटरञ्जनकन्दमध्यस्थं कृत्वा मृदा सवेष्टय पुटपाकविधानेन दशवनोपलैः पुटेत्, एवं शतपुटानि; ततः शतपुटान्येवं वनवृन्ताकस्य, ततः शतपुटान्येवं मन्दारफलस्य, ततः शतपुटान्येवमिन्द्रवारुणिकाफलस्य, ततः शतपुटान्येवमम्लवेतसफलस्य, ततः सिद्धो जातश्चात्यरुणवर्णो भवति । रक्तिकैकामस्य पर्णखण्डेन त्रिगन्धादिसुगन्धिद्रव्यैर्यथालाभं भक्षयेत् । द्विगुणाग्निर्द्विगुणकामः कासश्वासक्षयज्वरादिनाशश्च ॥

तिक्तोष्णं हिङ्गुलं दिव्य रसगन्धसमुद्भवम् ।
मेहकुष्ठहरं रुच्य बल्यं मेधाग्निवर्धनम् ॥ ८ ॥

अथ हिङ्गुलोत्पत्तिः, सा च रसपद्धत्युक्ता लिख्यते—

अशुद्धपारदं भागं चतुर्भागं[२] च गन्धकम् ।
उभौ क्षिप्त्वा लोहपात्रे क्षण मृद्वग्निना पचेत् ॥ ९ ॥

१ 'तनुवस्त्रक टुक' ख । २ 'नवभाग' ख ।

तस्मिन् मनःशिलाचूर्णं पारदाद्दशमाशकम्।
क्षिप्त्वा चाल्यमयोदर्व्या ह्यवतार्य सुशीतलम् ॥ १० ॥
ततस्तु खण्डशः कृत्वा काचकूप्यां निरुध्य च।
वस्त्रमृत्तिकया सम्यक्काचकूपीं प्रलेपयेत् ॥ ११ ॥
सर्वतोऽङ्गुलमानेन छायाशुष्कां च कारयेत्।
वालुकायन्त्रगर्भे तु दिनं मृद्वग्निना पचेत् ॥ १२ ॥
क्रमवृद्धाग्निना पश्चात्पचेद्दिवसपञ्चकम्।
सप्ताहात्तु समुद्धृत्य हिङ्गुलः स्यान्मनोहरः ॥ १३ ॥

अन्यच्च—

उर्ध्वपातनयुक्त्या तु डमरूयन्त्रपाचितम्।
हिङ्गुलं तस्य सूत तु शुद्धमेव न शोधयेत् ॥ १४ ॥
निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम्।
घृष्ट्वा दरदमूर्ध्वं तु पातयेत्सूतयुक्तिवत् ॥ १५ ॥
तत्रोर्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम्।
शुद्धमेव हि तत्सूतं सर्वकर्मसु योजयेत् ॥ १६ ॥

हिङ्गुलस्य शोधनमेव दृष्टं रसग्रन्थेषु नान्यत् क्रियान्तरमिति दिक् ॥

इति श्रीसारस्वतकुलावतसोपा यायश्रीमा ाविरचितायुर्वेदप्रकाशे तृतीयोऽध्याय ॥ ३ ॥

## अथ चतुर्थोऽध्यायः।

### अथाभ्रकीयमध्याय व्याख्यास्याम ।

पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम्।
विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ॥ १ ॥
ते निपेतुर्घनध्वानाः शिखरेषु महीभृताम्।
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् ॥ २ ॥

तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात् ।
गगनात्पतितं यस्माद्गगनं च ततो मतम् ॥ ३ ॥
ब्रह्मक्षत्रियविट्शूद्रभेदात्तत्स्याच्चतुर्विधम् ।
क्रमेणैव सितं रक्तं पीतं कृष्णं च वर्णतः ॥ ४ ॥
प्रशस्यते सितं तारे रक्तं तत्तु रसायने ।
पीतं हेमनि कृष्णं तु गदेषु द्रुतयेऽपि च ॥ ५ ॥
पिनाकं दर्दुरं नागं वज्रं चेति चतुर्विधम् ।
कृष्णाभ्रं कथितं प्राज्ञैस्तेषां लक्षणमुच्यते ॥ ६ ॥
मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकं दलसंचयम् ।
अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम् ॥ ७ ॥
दर्दुरं त्वग्निनिक्षिप्तं कुरुते दर्दुरध्वनिम् ।
गोलकान् बहुशः कृत्वा तत्स्यान्मृत्युप्रदायकम् ॥ ८ ॥
नागं तु नागवद्वह्नौ फूत्कारं परिमुञ्चति ।
तद्भक्षितमवश्यं तु विदधाति भगन्दरम् ॥ ९ ॥
वज्रं तु वज्रवत्तिष्ठेन्न चाग्नौ विकृतिं व्रजेत् ।
सर्वाभ्रेषु वरं वज्रं व्याधिवार्धक्यमृत्युजित् ॥ १० ॥

अन्यत्रापि—

यदञ्जननिभं क्षिप्तं न वह्नौ विकृतिं व्रजेत् ।
वज्रसंज्ञं हि तद्योग्यमभ्रं सर्वत्र नेतरत् ॥ ११ ॥
अभ्रमुत्तरशैलोत्थं[1] बहुसत्त्वं गुणोत्तरम् ।
दक्षिणाद्रिभवं स्वल्पसत्त्वमल्पगुणोत्तरम् ॥ १२ ॥

अभ्रग्रहणे विशेषः—

अभ्रं गृहीतं खनितो भिषग्भिः संखानयित्वा पुरुषप्रमाणम् ।
तद्भारवत्सत्त्वफलप्रदं स्याद्गुणाधिकं स्वल्पगुणं ततोऽन्यत् ॥१३

---

१ 'अभ्रकं पूर्वशैलोत्थं' ग ।

अथ वज्राभ्रकगुणाः—

अभ्रं कषायं मधुरं सुशीतमायुःकरं धातुविवर्धनं च।
हन्यात्रिदोषव्रणमेहकुष्ठप्लीहोदरग्रन्थिविषकृमींश्च ॥ १४ ॥
रोगान् हन्ति दृढयति वपुर्वीर्यवृद्धिं विधत्ते
तारुण्याढ्यं रमयति शतं योषितां नित्यमेव।
दीर्घायुष्यान् जनयति सुतान् विक्रमैः सिंहतुल्या-
न्मृत्योर्भीतिं हरति सततं सेव्यमानं मृताभ्रम् ॥ १५ ॥

अथाशुद्धस्य मारणे दोषमाह—

पीडां विधत्ते विविधां नराणां कुष्ठं क्षयं पाण्डुगदं च शोफम्।
हृत्पार्श्वपीडां च करोत्यशुद्धमभ्रं हि तद्वद्गुरु वह्निहृत्स्यात्[1] ॥१६॥

अथ मृताभ्रस्यापि लक्षणगुणदोषानाह—

निश्चन्द्रकं सुसूक्ष्मं च लोचनाञ्जनसंनिभम्।
तदा तु मृतमित्युक्तमभ्रकं नान्यथा मृतम् ॥ १७ ॥

अन्यच्च—

मृतं निश्चन्द्रतां यातमरुणं चामृतोपमम्।
सचन्द्रं विषवज्ज्ञेयं मृत्युकृद्व्याघ्ररोमवत् ॥ १८ ॥

व्याघ्रश्मश्रुरोम यद्वन्मारयति तद्वदित्यर्थः ॥

अस्य मारणे पुटसंख्यामाह—

शतादिस्तु सहस्रान्तः पुटो देयो रसायने।
दशादिस्तु शतान्तः स्याद्व्याधिनाशनकर्मणि ॥ १९ ॥
सहस्रपुटपक्षे तु भावना पुटनं भवेत्।
मर्दनं तु तथा न स्यादिति प्राचां हि संमतम् ॥ २० ॥

अथास्यानुपानं मात्राप्रमितिश्च—

वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं
दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलं च कुष्ठामयम्।

---

[1] 'तज्जाठरवह्निहृत्' ग।

ऊर्ध्वश्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं
मन्दाग्निं जठरव्यथां विजयते योगैरशेषामयान् ॥ २१ ॥
इति रसवाग्भटात् ॥

अथ शोधनम्—

वज्राभ्रकं धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत् ।
सप्तधा भिन्नपत्रं तत्तण्डुलीयाम्लयोर्द्रवैः ॥ २२ ॥
भावयेदष्टयामं तदेवं शुध्यति चाभ्रकम् ।

मतान्तरम्—

वज्राभ्रकं वह्नितप्तं निक्षिप्तं सप्तसप्तधा ॥ २३ ॥
गोदुग्धे त्रिफलाक्काथे काञ्जिके सुरभीजले ।
शुद्धिमायाति मलतः प्रक्षिप्तं वा त्रिधा त्रिधा ॥ २४ ॥

रसमञ्जर्याम्—

अथवा बदरीक्काथे ध्मातमभ्रं विनिक्षिपेत् ।
मर्दितं पाणिना शुष्कं धान्याभ्रादतिरिच्यते ॥ २५ ॥

अथैवं शुद्धस्य धान्ययोगेन सूक्ष्मीकरणं तस्य धान्याभ्रक-मिति संज्ञा, तत्प्रकारो यथा—

पादांशशालिसंयुक्तमभ्रं बद्ध्वाऽथ कम्बले ।
त्रिरात्रं स्थापयेन्नीरे क्लिन्नं वै मर्दयेत्करैः ॥ २६ ॥
तन्नीर एव यत्नेन यावत्सर्वं स्रवेत्ततः ।
कम्बलाद्गलितं सूक्ष्मं वालुकासदृशं च यत् ।
तद्धान्याभ्रकमित्युक्तं मारणं चाप्यथो भवेत् ॥ २७ ॥

अत्र नीरं तु काञ्जिकमेव; यत उक्तं वार्तिककृता—

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्यत्तद्धान्याभ्रमिति कथ्यते ॥ २८ ॥

अथैवं संस्कृतस्य मारणमुच्यते—

धान्याभ्रकस्य भागैकं द्वौ भागौ शुद्धटङ्कणात्।
पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत्।
स्वभावशीतलं चूर्णं सर्वयोगेषु योजयेत्॥ २९॥

इत्येकपुटि॥

मृत्पात्रे तु समावर्त्य समटङ्कणमभ्रकम्।
ढालयेत्पयसि क्षिप्रं पिष्ट्वा निश्चन्द्रतां व्रजेत्॥ ३०॥

इत्येकपुटि॥

धान्याभ्रकं समादाय शोषयित्वा तु मर्दयेत्।
अर्कक्षीरैर्दिनं मर्द्यमर्कमूलद्रवेण च॥ ३१॥
चक्राकारं ततः कृत्वा शोषयेदातपेन तु।
वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत्॥ ३२॥
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः।
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम्।
म्रियते नात्र संदेहः सर्वरोगेषु योजयेत्॥ ३३॥

इति दशपुटि॥

अथ वाग्भटः—

धान्याभ्रं कासमर्दस्य रसेन परिमर्दितम्।
पुटितं दशवारेण म्रियते नात्र संशयः।
तद्वन्मुस्तारसेनापि तण्डुलीयरसेन च॥ ३४॥

इति दशपुटि॥

धान्याभ्रकं समादाय मुस्ताक्वाथैः पुटत्रयम्।
तद्वत्पुनर्नवानीरैः कासमर्दरसैस्तथा॥ ३५॥

---

१ एकश्चासौ पुटश्च एकपुटः, सोऽस्त्यस्मिन्निति एकपुटि, अभ्रकभस्मेत्यस्य विशेषणमेतत्। एकपुटयोरादौ पूर्वकालैकेत्यादिना समानाधिकरणतत्पुरुषः, ततोऽदन्तत्वादिन्प्रत्ययः। एवं दशपुटीत्यादावपि ज्ञेयम्।

कासमर्दः 'कसोदी' इति भाषा ॥

नागवल्लीदलैस्तद्वत्सूर्यक्षीरैः पुटत्रयम् ।
क्वाथैर्वटजटोत्थैश्च त्रिः पुटेन्मुसलीजलैः ॥ ३६ ॥
त्रिर्गोक्षुरकषायेण त्रिः पुटेद्वानरीरसैः ।
मोचाकन्दरसैः पाच्य त्रिवार कोकिलाक्षजैः ॥ ३७ ॥
रसैः पुटेत्ततो लोध्रैः क्षीरादेकं पुट मुहुः ।
दध्ना घृतेन मधुना स्वच्छया सितया तथा ॥ ३८ ॥
एकमेक पुट दद्यादभ्रस्यैवं मृतिर्भवेत् ।
सर्वरोगहर व्योम जायते योगवाहकम् ॥ ३९ ॥
कामिनीमददर्पघ्न शस्त पुस्त्वोपघातिनाम् ।
वृष्यमायुःकर शुक्रवृद्धिसतानकारकम् ॥ ४० ॥

इत्येकचत्वारिंशत्पुटि ॥

दुग्धत्रय कुमार्यम्बु गङ्गापुत्रं नृमूत्रकम् ।
वटशुङ्गमजारक्तमेभिरभ्र सुमर्दितम् ।
शतधा पुटितं भस्म जायते पद्मरागवत् ॥ ४१ ॥

दुग्धत्रयमिति वटदुग्ध, स्नुहीदुग्ध, अर्कदुग्ध च; गङ्गापुत्र भद्रमुस्ता । इति शतपुटि ॥

श्रीगोविन्दपादास्तु अन्यान्येव गगनमारकाणि भेषजानि लिखन्ति, यथा—अर्कदुग्ध १, वटदुग्धं २, सेहुण्डदुग्धं ३, घृतकुमारी ४, पञ्चाङ्गुलमूलपत्राणि ५, काकमाची ६, मुस्ता ७, वटप्ररोहः ८, बस्तशोणित ९, बिल्वमूलपत्राणि १०, अग्निमन्थः ११, टिण्डुकः १२, पाटली १३, श्रीपर्णी १४, शालिपर्णी १५, पृश्निपर्णी १६, कण्टकारी १७, कदम्बः १८, बृहती १९, गोक्षुरः २०, तिलपर्णी २१, खरमञ्जरी २२, गुडः २३, सिद्धार्थको धवलः २४, पालङ्क्या २५, मालती २६, गोमूत्रं २७, हरीतकी २८, धात्री २९, बिभीतकः ३०,

तालीसपत्रं ३१, चित्रकमूलपत्रं ३२, जलकुम्भी ३३, तालमूली ३४, वृषः ३५, वाजिगन्धा ३६, अगस्त्यपत्रं ३७, भृङ्गराजः ३८, कदलीकन्दरसः ३९, सप्तपर्णः ४०, देवदारु ४१, गुडूची ४२, धत्तूरः ४३, कासमर्दकः ४४, मातुलानी ४५, लोध्रः ४६, तुलसी ४७, दूर्वा ४८, मारीषः ४९, मूषकपर्णी ५०, दाडिमपल्लवाः ५१, घोण्टा ५२, शङ्खपुष्पी ५३, नागवल्ली ५४, पिण्डीतगर ५५, श्वेतपुनर्नवा ५६, हिलमोचिका ५७, मण्डूकपर्णी ५८, तिक्तिका ५९, मदनः ६०, इत्यादिभिर्मर्दनपुटनैरेकैकेनाप्यभ्रको मारणीयः। इति अभ्रकमारणीयगणः। आभिर्यथालाभं सहस्रपुटा देयाः। यथासंख्य च प्रत्येक सप्तदशपुटाः प्रायशो भवन्ति। एव सहस्रसंख्या पूर्यते। इति सहस्रपुटि॥

अथारुणभस्मन आकाङ्क्षा भवति चेत्तत्प्रकारो रसपद्धत्या—

अथ नागबला भद्रमुस्ता दुग्ध वटस्य च।
यद्वा वटजटातोय हरिद्रावारिणा पुटेत्॥ ४२॥
मञ्जिष्ठाक्काथतोयेन सर्वैरेभिर्यथाक्रमम्।
पुटितं भावनायोगाच्चरमे पुटने मुहुः।
जायते ह्यरुणं चाति भस्म वज्राभ्रकोद्भवम्॥ ४३॥

अथैवं मृतस्याभ्रकस्यामृतीकरणाख्यः संस्कार उक्तः। अरुणभस्मनस्तु पुनरमृतीकरणेन गुणवृद्धिर्वर्णहानिश्च भवति। तद्यथा—

त्रिफलोत्थकषायस्य पलान्यादाय षोडश।
गोघृतस्य पलान्यष्टौ मृताभ्रस्य पलान् दश॥ ४४॥
एकीकृत्य लोहपात्रे पाचयेन्मृदुवह्निना।
द्रवे जीर्णे समादाय सर्वरोगेषु योजयेत्॥ ४५॥

अथान्यत्रापि—

वराम्बु गोघृतं चाभ्रं कलाषड्दिक्समांशकम् ।
मृद्वग्निना पचेल्लौह्यामम‍ृतीकरणं त्विदम् ॥ ४६ ॥

गोघृतेनैवामृतीकरणमुक्त, तद्यथा—

तुल्य घृत मृताभ्रेण लोहपात्रे विपाचयेत् ॥
घृते जीर्णे ततश्चूर्ण सर्वकार्येषु योजयेत् ॥ ४७ ॥

इत्यमृतीकरणम् ॥

अथाभ्रकसेविना वर्ज्यपदार्थानि कथ्यन्ते—

क्षाराम्लविदलं कोलं कर्कटी कारवेल्लकम् ।
वृन्ताक च करीरं च तैलं चाभ्रे विवर्जयेत् ॥ ४८ ॥

अथाभ्रकसत्त्वनिष्कासनविधिः कथ्यते ।—

चूर्णीकृतं गगनपत्रमथारनाले
धृत्वा दिनैकमवशोष्य च सूरणस्य ।
भाव्यं रसैस्तदनु मूलरसैः कदल्याः
पादांशटङ्कणयुत शफरैः समेतम् ॥ ४९ ॥

पिण्डीकृत तु बहुधा महिषीमलेन
संशोष्य कोष्ठगतमाशु धमेद्धठाग्नौ ।
सत्त्वं पतत्यतिरसायनजारणार्थ
योग्य भवेत्सकललोहगुणाधिकं च ॥ ५० ॥

एव पतिते सत्त्वे ततः किं कार्य तदाह—

कणशो यद्भवेत्सत्त्वं मूषायां प्रणिधाय तत् ।
मित्रपञ्चकयुग्ध्मातमेकीभवति घोषवत् ॥ ५१ ॥
घृतमधुगुग्गुलुगुञ्जाटङ्कणमेतत्तु मित्रपञ्चकं नाम ।
मेलयति सप्तधातूनङ्गाराग्नौ तु धमनेन ॥ ५२ ॥

अथास्य सत्त्वस्य शोधनमारणमाह—

अयोवच्छोधन तस्य मारणं तद्वदेव तु ।
यद्वा—मारित ताम्रवद्गन्धपारदाभ्या निषेचयेत् ॥ ५३ ॥

पिण्डीकृतं तु बहुधेत्यस्य व्याख्या—तिन्दुकप्रमाणान् बहुपिण्डान् गोलकान् कृत्वेत्यर्थः । कोष्ठगतमिति व्याख्या—अधःपातनकोष्ठ्या स्थापितम् । मारणं तद्वदेव तु व्याख्या—त्रिफलादिभिर्लोहवद्भावयित्वा विंशतिवारं षष्टिवार शतवार वा पुटयित्वा सत्त्वभस्म संपाद्यं भक्षणार्थ, रसे जारणार्थ तु शोधयित्वा जार्यम् ॥

अथास्य गुणाः—

सत्त्वमभ्रस्य शिशिर त्रिदोषघ्न रसायनम् ।
विशेषात्पुंस्त्वजनन वयसः स्तम्भन परम् ॥ ५४ ॥
नानेन सदृशं किंचिद्भैषज्यं पुंस्त्वकृत्परम् ।
सत्त्वसेवी वयःस्तम्भं लभते नात्र संशयः ॥ ५५ ॥

अथान्यच्च—

सर्वेषामुपपूर्वाणा रसानां सत्त्वमारणम् ।
कर्तव्यं भस्मसूतेन गन्धकेनाग्निगर्भके ॥ ५६ ॥
यत्रोपरसभागोऽस्ति रसे तत्सत्त्वयोजनम् ।
कर्तव्यं षड्गुणाधिक्याद्रसज्ञत्वमभीप्सता ॥ ५७ ॥

अथ सामान्यतः सर्वेषा सत्त्वपातनमुच्यते—

गुडः पुरस्तथा लाक्षा पिण्याकं टङ्कणं तथा ।
ऊर्णा सर्जरसश्चैव क्षुद्रमीनसमन्वितम् ॥ ५८ ॥
सत्त्वपातनद्रव्येण सयुक्तं खल्वमध्यके ।
एतत्सर्व तु सचूर्ण्य छागदुग्धेन पिण्डकाः ॥ ५९ ॥
कृत्वा ध्माताः खराङ्गारैः सत्त्वं मुञ्चन्ति निश्चितम् ।

पाषाणमृत्तिकादीनां लोहानां च पृथक्पृथक् ।
अन्येषामप्यसाध्यानां व्योमसत्त्वस्य का कथा ॥ ६० ॥

अथ सत्त्वप्रसंगाद्द्रुतयोऽपि लिख्यन्ते, अत्र केचिद्वदन्ति—

द्रुतयो नैव जायन्ते शास्त्रे प्रोक्ता अपि ध्रुवम् ।
विना शम्भोः प्रसादेन न सिध्यन्ति कदाचन ॥ ६१ ॥

इत्येवमस्तु, तथाऽपि शास्त्रारूढत्वात्कदाचिद्भाग्ययोगाच्छङ्करभक्त्या सिध्यन्ति, अतो मयाऽत्र लिख्यन्ते, यथा—

अगस्त्यपत्रनिर्यासैर्मर्दितं धान्यकाभ्रकम् ।
सूरणोदरमध्ये तु निक्षिप्तं लेपित मृदा ॥ ६२ ॥
गोष्ठभूमौ खनित्वा तु हस्तमात्रे हि पूरितम् ।
मासान्निष्काशितं तत्तु जायते पारदोपमम् ॥ ६३ ॥

इत्यभ्रकद्रुतिः ॥

निजरसबहुपरिभावितसुरदालीचूर्णमात्रवापेन ।
द्रवति पुनः संस्थान भजते गगनं न कालेऽपि ॥ ६४ ॥

इत्यभ्रकद्रुतिः ॥

निजरसशतपरिभावितकञ्चुकिकन्दोत्थचूर्णपरिवापात् ।
द्रुतमास्तेऽभ्रकसत्त्वं तथैव सर्वाणि लोहानि ॥ ६५ ॥

इत्यभ्रकसत्त्वद्रुतिः सर्वलोहद्रुतिश्च ॥

अथानेकद्रुतिमेलनमाह—

कृष्णागरुनाभिसितै[1] रसोनसितरामठैरिमा द्रुतयः ।
सोष्णे मिलन्ति मर्द्याः स्त्रीकुसुमपलाशबीजरसैः ॥ ६६ ॥

अथ मुक्ताफलाना द्रुति तथाऽन्येषामपि रत्नाना द्रुतिप्रकारमाह—

मुक्ताफलानि सप्ताहं वेतसाम्लेन भावयेत् ।
जम्बीरोदरमध्ये तु धान्यराशौ निधापयेत् ॥ ६७ ॥

---

१ 'कृष्णागुरुणा मिलितै' ग ।

पुटपाकेन तच्चूर्णं द्रवते सलिलं यथा।
कुरुते योगराजोऽयं रत्नानां द्रावणं प्रिये॥ ६८॥
इति मुक्तादिरत्नद्रुतयः॥

अगस्त्यपुष्पनिर्यासैर्मर्दितं सूरणोदरे।
गोष्ठभूस्थं घनं मासं जायते जलसंनिभम्॥ ६९॥

इत्यपि धान्याभ्रकद्रुतिः। द्रुतीनां प्रयोजनं तु रसेन्द्रे जारणार्थमुपयुज्यन्त इति ज्ञेयम्।

अथाभ्रकस्य महाप्रयोगानाह—

लक्ष्मीविलासकाभ्रं तु शृङ्गाराभ्रकमेव च।
सम्यङ्मारितमित्यादि नित्यनाथोदिताभ्रकम्॥ ७०॥

एते महाप्रयोगाश्च वीर्यस्तम्भाधिकारके।
लिखितास्ते मया नेह पुनरुक्त्या प्रकीर्तिताः॥ ७१॥

अन्यच्च—

निश्चन्द्रमभ्रकं भस्म धात्रीव्योषविडङ्गकम्।
भृङ्गाम्बुना जलैर्वाऽपि खल्वे मर्द्यं द्वियामकम्॥ ७२॥
गुटिकां कारयेत्सर्वां छायाशुष्कां सुरक्षयेत्।
एकैकां भक्षयेत्प्राज्ञो वर्षमेकं निरन्तरम्॥ ७३॥
द्वितीये तु पुनर्वर्षे भक्षयेद्गुटिकाद्वयम्।
एवं संवत्सरेणैव गुटिकैकां विवर्धयेत्॥ ७४॥
त्रिवर्षस्य प्रयोगोऽयमभ्रकस्य प्रकीर्तितः।
अनेन क्रमयोगेन व्योम्नः शतपलं नरः॥ ७५॥
अद्यान्द्भवेन्न संदेहो वज्रकायो महाबलः।
मासत्रयेण रक्ताख्यं क्षयं श्वासं सुदारुणम्॥ ७६॥
पञ्चकासांश्च हृच्छूलं ग्रहण्यर्शोगदांस्तथा।
आमवातं तथा शोषं पाण्डुरोगं सुदारुणम्॥ ७७॥

मृत्युकल्पं महाव्याधि वातपित्तकफोद्भवम् ।
हन्त्यष्टादशकुष्ठानि नृणा पथ्याशिना ध्रुवम् ॥ ७८ ॥

इत्यभ्रककल्पः ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे चतुर्थोऽध्याय ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ।

अथ हरितालस्य नामलक्षणगुणशोधनमारणाध्याय ।

हरितालं तु तालं स्यादालं तालकमित्यपि ।
हरितालं द्विधा प्रोक्तं पत्राख्य पिण्डसंज्ञकम् ॥ १ ॥
तयोराद्यं गुणैः श्रेष्ठ ततो हीनगुण परम् ।
स्वर्णवर्ण गुरु स्निग्ध सपत्रं चाभ्रपत्रवत् ॥ २ ॥
पत्राख्यं तालकं विद्याद्गुणाढ्य तद्रसायनम् ।
निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा लघु ।
स्त्रीपुष्पहारक स्वल्पगुणं तत् पिण्डतालकम् ॥ ३ ॥

तालकगुणाः—

हरितालं कटु स्निग्ध कषायोष्णं हरेद्विषम् ।
कण्डूकुष्ठादिरोगास्रकफपित्तकचव्रणान् ॥ ४ ॥

अथाशुद्धस्यासम्यङ्मारितस्य च दोषानाह—

हरति च हरिताल चारुता देहजाता
सृजति च बहुतापानङ्गसंकोचपीडाः ।
वितरति कफवातौ कुष्ठरोगं विदध्या-
दिदमशितमशुद्धं मारितं वाऽप्यसम्यक् ॥ ५ ॥

शोधितं हरितालं तु कान्तिवीर्यविवर्धनम् ।
कुष्ठादिपापरोगघ्नं जरामृत्युहरं परम् ॥ ६ ॥
अशुद्धतालमायुघ्नं कफमारुतमेहकृत् ।
तापस्फोटाङ्गसंकोचान् कुरुतेऽतो विशोधयेत् ॥ ७ ॥

अथ मृतलक्षणम्—

तालं मृतं तदा ज्ञेयं वह्निस्थं धूमवर्जितम्।
सधूमं न मृतं प्राहुर्वृद्धवैद्या इति स्थितिः॥ ८॥

इयं परीक्षा वृद्धानां मुखेभ्य एव श्रुत्वा मया पद्येन निबद्धा, परं रसशास्त्रेषु कुत्रापि न दृष्टा; भवतु सत्येयं, नह्यमूला प्रसिद्धिरिति न्यायात्।

अथ तालकशोधनम्—

तालकं कणशः कृत्वा बद्ध्वा पोटलिकां ततः।
दोलायन्त्रेण यामैकं सचूर्णे काञ्जिके पचेत्॥ ९॥
यामैकं दोलया तद्वत्कूष्माण्डस्वरसे ततः।
तिलतैले पचेद्यामं यामं च त्रैफले जले।
दोलायन्त्रे चतुर्यामं पक्वं शुध्यति तालकम्॥ १०॥

अथ तालकस्य मारणविधिः—

पत्राख्यं तालकं शुद्धं पौनर्नवरसेन तु।
खल्वे विमर्दयेदेकं दिनं पश्चाद्विशोषयेत्॥ ११॥
संशोष्य गोलकं कृत्वा चक्राकारमथापि वा।
ततः पुनर्नवाक्षारैः स्थाल्यामर्धं प्रपूरयेत्॥ १२॥
तत्र तद्गोलकं कृत्वा पुनस्तेनैव पूरयेत्।
स्थालीं चूल्यां समारोप्य क्रमाद्वह्निं विवर्धयेत्॥ १३॥
दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदीपयेत्।
एवं तन्म्रियते तालं मात्रा तस्यैकरक्तिका।
अनुपानान्यनेकानि यथारोगं प्रयोजयेत्॥ १४॥

किंचिद्यथा—

गुडूच्यादिकषायेण गदानेतान् व्यपोहति।
सोपद्रवं वातरक्तं कुष्ठान्यष्टादशापि च॥ १५॥

फिरङ्गदेशजं जन्तोर्हन्ति रोगं सुदुस्तरम् ।
विसर्पमण्डल कण्डूं पामां विस्फोटकं तथा ॥ १६ ॥
वातरक्तकृतान् रोगानन्यानपि विनाशयेत् ।
एतद्भेषजसेवी तु लवणाम्लौ विवर्जयेत् ॥ १७ ॥
तथा कटुरसं वह्निमातप दूरतस्त्यजेत् ।
लवणं यः परित्यक्तुं न शक्नोति कथंचन ।
म तु सैन्धवमश्नीयान्मधुरोपरसो हि सः ॥ १८ ॥

इति भावप्रकाशीयं हरितालभस्म बहुभिर्बहुशोऽनुभूतमस्ति ।

अथ लघुयोगतरङ्गिण्याम्—

जम्बीरद्रवमध्ये तु प्रक्षाल्य नटमण्डनम् ।
दशांशं टङ्कणं दत्त्वा खण्डशः परिमेलयेत् ॥ १९ ॥
चतुर्गुणे गाढपट्टे निबध्य प्रहरद्वयम् ।
दोलायन्त्रेण संस्वेद्य प्रदीपप्रतिमेऽनले ॥ २० ॥
चूर्णतोये काञ्जिके च कूष्माण्डाम्बुनि तैलके ।
त्रिफलाम्बुनि तत्पश्चात्क्षालयित्वाऽम्लवारिणा ॥ २१ ॥
ततः पलाशमूलत्वग्वारिपिष्ट प्रशोषयेत् ।
महिषीमूत्रसपिष्टं पुनस्तं परिशोषयेत् ॥ २२ ॥
तं गोलक शरावाभ्या सपुटीकृत्य यत्नतः ।
खाते गजपुटे पक्त्वा स्वाङ्गशीत समुद्धरेत् ।
अजादुग्धैः पुनः पिष्ट्वा शोषयेद्गोलकीकृतम् ॥ २३ ॥
आकण्ठं भस्म पालाशं हण्डिकाया विनिक्षिपेत् ।
सम्यक् चूर्णस्य कुडवं दत्त्वा तत्र विचक्षणः ॥ २४ ॥
स्थापयेद्गोलकं तत्र पुनश्चूर्ण च भस्म च ।
यथा धूमो बहिर्याति न तथा तां विमुद्रयेत् ॥ २५ ॥
द्वात्रिंशत्प्रहरानग्निं चूल्या भक्तवदर्पयेत् ।
स्वाङ्गशीतं समुद्धृत्य संचूर्ण्य नटमण्डनम् ॥ २६ ॥

हिमकुन्देन्दुसंकाशं निर्धूम कृष्णवर्त्मनि।
रक्तिकाऽस्य प्रदातव्या पुराणगुडयोगतः॥ २७॥
पथ्यं च चणकस्योक्ता रोटिका षष्टिकौदनम्।
निर्लोण, किंचनाप्यन्यन्न खादेदेकविंशतिम्।
दिनानि निर्वातगतः सर्वव्यापारवर्जितः॥ २८॥

अथ फलम्—

गलत्कुष्ठ पुण्डरीकं श्वित्र कापालिकं तथा।
औदुम्बरं ऋष्यजिह्वं काकण स्फोटमुल्बणम्॥ २९॥
वातरक्तं पाण्डुरोगं दद्रूं पामां विचर्चिकाम्।
विसर्पमर्शांसि तथा विपादी च भगन्दरम्॥ ३०॥
सर्वथा क्रमशो हन्ति सेवितं हरितालकम्।
अन्यानपि व्रणान् सर्वानन्धकारमिवांशुमान्॥ ३१॥

इति हरितालमारणम्॥

अथ मात्रापरिमितिः—

रोगी, तण्डुलपरिमिता मात्रा सितोपलाजीरकचूर्णानुपानेन सह भक्षयेत्। पथ्यं पूर्वोक्तं षष्टिकौदनं गोदुग्धं वा। अर्धभागेन तस्य तु रक्तिपरिमिता मात्रा, गुणास्तु पूर्वस्मादधिकतराः। विशेषस्तु—

राजयक्ष्मादिकान् रोगान् विजित्य कुरुते वपुः।
वज्रतुल्यं जरा हत्वा नृणा पथ्याशिनां ध्रुवम्॥ ३२॥

इति हरितालमारणम्॥

अथ सिद्धमते—

तबक्याख्यं हरितालं महिषीमूत्रे, घृतकुमारीरसे, चूर्णतोये, शरपुङ्खारसे, कूष्माण्डरसे, निम्बूरसे च पृथक्पृथक् षट्प्रहरं संशोध्यं, इति शुद्धिः। अथ मर्दन—कूष्माण्डरसेन दिनानि२१, कागदीनिम्बूरसेन दिनानि २१, धत्तूररसेन दिनानि २१,

सहदेवीरसेन दिनानि २१, पलाशरसेन दिनानि २१, बदरीमूलरसेन दिनानि २१, आर्द्रकरसेन दिनानि २१, गोभीरसेन दिनानि २१, छिक्किणीरसेन दिनानि २१, हुलहुलरसेन दिनानि २१, नागार्जुनीरसेन दिनानि २१, भृङ्गराजरसेन दिनानि २१, एरण्डमूलरसेन दिनानि २१, ब्रह्मदण्डीरसेन दिनानि २१, श्वेतलशुनरसेन दिनानि २१, पलाण्डुरसेन दिनानि २१, स्वर्णवल्लीरसेन दिनानि २१, काकमाचीरसेन दिनानि २१, बलारसेन दिनानि २१, वज्रीदुग्धेन दिनानि २१, अर्कदुग्धेन दिनानि २१, एवं दिनसंख्या ४४१, एतैर्वर्ष एको १, मासौ द्वौ २, दिनानि २१ भवन्ति । एतत्कष्टं कर्तुमशक्तश्चेत्तेन दिनशब्दो भावनापरतया बोध्यः । ततश्चक्रिकां कृत्वा ता घर्मशुष्कां कारयेत्, ततोऽतिदृढां हण्डी मृत्कर्पटैरेकविंशतिवारं लेपयेत्, ततस्तस्या हण्डिकाया पिप्पलस्य विभूति पूरयेदङ्गुष्ठपरिमितं यावत्, तदुपरि ता चक्रिकां दृढा संस्थाप्य तदुपरि पुनस्तद्विभूत्याऽतिदृढ पूरयेदाकण्ठं, ततो मुद्रा कृत्वा, क्रमविवर्धितमग्निं दद्यात्प्रहराणां चतुःषष्टि, अष्टौ दिनानीति यावत् । सिद्धं भस्म भवति, तद्यत्नतः संरक्षयेत् । शिवस्य महती पूजा कृत्वा, देवगोब्राह्मणवैद्यान् पूजयित्वा, तस्य मात्रा तण्डुलपरिमितां गुञ्जापरिमिता वा भक्षयेत्, यथारोगमनुपानानि, पथ्यं लवणाम्लतीक्ष्णतैलवर्ज्यं प्रोक्तवत् ज्ञेयम् । अस्य फलश्रुतिः—त्रिःसप्तहान्मण्डलैकेन वा श्वेतप्रभृत्यष्टादशकुष्ठानि, यावन्तो रक्तविकाराः, त्रयोदशसंनिपाताः, अपस्मारादयो यावन्तः पापरोगाः, भगन्दरनाडीव्रणप्रभृतयो महाव्रणाः, प्रशीर्णं वातरक्तं, उपदंशफिरङ्गाद्या लिङ्गरोगाः, श्लीपदग्रन्थिप्रभृतयः सर्वाङ्गशोफाः, सूतिकावातरोगप्रभृतयः सर्वशीतवातविकाराः, श्वासकासाद्या वातविकाराः, दुष्टपीनसप्रभृतयः प्रतिश्यायाः,

अर्शादयोऽष्टौ महारोगाः, वह्निमान्द्यजा ग्रहणीप्रभृतयः, मधुमेहाद्याः सर्वे प्रमेहाः, मेदोवृद्ध्यर्बुदगण्डमालाद्याः कठिनविकाराः, आमवातगृध्रस्याद्या मूढविकाराः, राजयक्ष्माद्याः शोषाः, किं चाशीतिसंख्या वातरोगाः, अनुपानभेदेन चत्वारिंशत्पित्तरोगाः, विंशतिसंख्याका कफजा रोगाः, दश रक्तजा रोगाः शीघ्रं प्रणश्यन्ति जराव्याधिविनाशश्च भवति; दिव्यदेहः कान्तिधृतिमान् सत्त्वसंयुतः कामिनीकामदर्पघ्नस्तार्क्ष्यदृष्टिः शूरो वदान्यश्च भवतीति सिद्धमते हरितालमारणम् । सिद्धाद्यैस्तु हरितालश्चतुर्विधः प्रोक्तः—बुगदादी १, गोदन्ती २, तबकी ३, पिण्डतालश्च ४; एते पिण्डाख्यात् क्रमेण श्रेष्ठतरा ज्ञेयाः ॥

अथ तालकसत्त्वपातनविधिः—

लाक्षा राजी तिलाः शिग्रुष्टङ्कणं लवणं गुडम् ।
तालकार्धेन संमिश्र्य छिद्रमूष्या निरोधयेत् ।
पुटेत्पातालयन्त्रेण सत्त्वं पतति निश्चितम् ॥ ३३ ॥

अथ रसपद्धत्याम् ।—

कुलित्थक्वाथटङ्कणमहिषीघृतमधुयुक्तं हरितालं शुद्धं दध्याज्येन भावितं हण्डिकायां क्षिप्त्वा उपरि मल्लं सच्छिद्रं दत्त्वा संधिलेपं कृत्वा क्रमेण वह्निं यामचतुष्टयं दद्यात्, यावन्नीलः पीतो वा धूमो ह्यागच्छति, ततः पाण्डुरे धूमे दृष्टे सति एकप्रहरमात्रं छिद्रं गोमयेनाच्छाद्य तीव्रमग्निं दद्यात्, यामान्ते चोत्पाट्य पाण्डुरधूमे दृष्टे सति अग्निं पूर्णं कुर्यात्, पश्चाच्छीतां स्थालीमुत्तार्य सत्त्वं ग्राह्यम् ॥

अन्यच्च ।—

जेपालसत्त्ववातारिबीजमिश्रं च तालकम् ।
कूपीस्थं वालुकायन्त्रे सत्त्वं मुञ्चति यामतः ॥ ३४ ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः ।

### अथ मन शिलाया नामलक्षणगुणा शोधन च ।

मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।
नेपाली कुनटी गोला शिला दिव्यौषधिः स्मृता ॥ १ ॥
तालकस्यैव भेदोऽस्ति मनोह्वा च तदन्तरम् ।
तालकं त्वतिपीतं स्याद्भवेद्रक्ता मनःशिला ॥ २ ॥
मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी करवीरिका ।
द्विखण्डाख्या च तासा तु लक्षणानि निबोधत ॥ ३ ॥
श्यामा हिङ्गुलवद्रक्ता किंचित्पीताऽतिदीप्तिका ।
करवीरा रक्तवर्णा चूर्णरूपाऽतिभारयुक् ॥ ४ ॥
किंचिद्रक्ता च गौरा च द्विखण्डा भारवत्तरा ।
त्रिविधासु च श्रेष्ठा स्यात्करवीरमनःशिला ॥ ५ ॥

अथ गुणाः—

मनःशिला गुरुर्वर्ण्या सरोष्णा लेखनी कटुः ।
तिक्ता स्निग्धा विषश्वासकासभूतकफास्रनुत् ॥ ६ ॥

अशुद्धमनःशिलागुणाः—

मनःशिला मन्दबल करोति जन्तुं ध्रुवं शोधनमन्तरेण ।
मलस्य बन्धं किल मूत्ररोधं सशर्करं कृच्छ्रगदं च कुर्यात् ॥७॥

अथ मनःशिलाशोधनम्—

पचेत्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम् ।
भावयेत्सप्तधा पित्तैरजायाः शुद्धिमृच्छति ॥ ८ ॥

अथ मतान्तरम् ।—

जयन्तिकाद्रवे तैले दोलायन्त्रे मनःशिला ।
दिनमेकमजामूत्रे भृङ्गराजरसेऽपि च ॥ ९ ॥

मतान्तरम्—

अगस्त्यपत्रतोयेन भाविता सप्तवारकम् ।
शृङ्गवेररसैर्वापि विशुध्यति मनःशिला ॥ १० ॥

मतान्तरम्—

भृङ्गागस्त्यजयन्तीनामार्द्रकस्वरसेषु च ।
दोलायन्त्रेण संस्विन्ना विशुध्यति मनःशिला ॥ ११ ॥

अथ मनःशिलासत्त्वपातनम्—

तालवच्च शिलासत्त्व ग्राह्यं तैरेव चौषधैः ।

रसपद्धत्याम्—अष्टमाशेन गुडगुग्गुललोहकिट्टेन सर्पिषा सह मर्दयित्वा मूषाया दत्त्वाऽन्धयित्वा कोष्ठ्या ध्माता सत्त्वं मुञ्चेत् ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे षष्ठोऽध्याय ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः ।

### अथ स्रोतोञ्जनस्य नामभेदगुणशोधनानि ।

अस्य 'सुरमा' इति भाषाया नाम ॥

अञ्जनं वामन चापि कपोताञ्जनमित्यपि ॥ १ ॥

इति नामानि ॥

स्रोतोञ्जनं तु द्विविध श्वेतकृष्णविभेदतः ।
तत्र स्रोतोञ्जनं कृष्ण, सौवीरं श्वेतमीरितम् ॥ २ ॥

अत्र केचित्पञ्चभेदान् पठन्ति—

स्रोतोञ्जनं च सौवीरमञ्जन च रसाञ्जनम् ।
नीलाञ्जन तदन्यच्च पुष्पाञ्जनकमेव च ॥ ३ ॥

इति पञ्चाञ्जनानि ॥

अथैषा लक्षणम्—

वल्मीकशिखराकारं भिन्नमञ्जनसंनिभम् ।
घृष्टं तु गैरिकच्छायमेतत्स्रोतोञ्जनं स्मृतम् ॥ ४ ॥
स्रोतोञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डुरम् ।
धूम्रवर्णाभमपि वा सौवीराञ्जनमुच्यते ॥ ५ ॥

अथोभयोर्गुणाः—

स्रोतोञ्जनं स्मृतं स्वादु चक्षुष्यं कफपित्तनुत् ।
कषायं लेखनं स्निग्धं ग्राहि छर्दिविषापहम् ॥ ६ ॥
हिध्माक्षयास्रहृच्छीतं सौवीरमपि तादृशम् ।
किंतु द्वयोरञ्जनयोः श्रेष्ठ स्रोतोञ्जनं स्मृतम् ॥ ७ ॥

अथोभयोः शोधनम्—

त्रिफलावारिणि स्वेद्य तद्वयं शुद्धिमृच्छति ।
भृङ्गराजरसे वाऽपि स्रोतःसौवीरकं शुचि ॥ ८ ॥

अथानयोः सत्त्वपातनम् ।—

स्रोतःसौवीरयोः सत्त्वं गृह्णीयात्कुशलो भिषक् ।
मनःशिलासत्त्ववच्च तन्नेत्र्यं परम मतम् ॥ ९ ॥

अथ रसाञ्जनोत्पत्तिनामगुणा. कथ्यन्ते—

दार्वीक्काथमजाक्षीरपादपक्क यदा घनम् ।
तदा रसाञ्जनं ख्यातं नेत्रयोः परमं हितम् ।
रसाञ्जनं तार्क्ष्यशैल रसगर्भ च तार्क्ष्यजम् ॥ १० ॥

इति नामानि ॥

अथ गुणाः—

रसाञ्जन कटु श्लेष्मविषनेत्रविकारनुत् ।
उष्णं रसायनं तिक्तं छेदन व्रणदोषहृत् ॥ ११ ॥

अथ नीलाञ्जनपुष्पाञ्जनलक्षणम्—

नीलाञ्जन नीलवर्ण स्निग्धं गुरुतरं स्मृतम् ।
पुष्पाञ्जनं रीतिकिट्टमिति केचिद्वदन्ति हि ॥ १२ ॥
सर्वाण्येतान्यञ्जनानि नेत्र्याणि परमं तथा ।
विषघ्नानि विशेषाच्च हिध्माध्मानहराणि च ॥ १३ ॥
अत्र रसाञ्जनं 'रसवन्ती' इति भाषायां प्रसिद्धम् ॥

अथ नीलाञ्जनशुद्धिः—

नीलाञ्जनं चूर्णयित्वा जम्बीररसभावितम् ।
दिनैकमातपे शुद्धं भवेत्कार्येषु योजयेत् ॥ १४ ॥

अन्यच्च—

अथवा भृङ्गजद्रावे स्विन्नानि सकलान्यपि ।
अञ्जनानि विशुध्यन्ति सत्त्व तेषा शिलासमम् ॥ १५ ॥

मनःशिलावत्सत्त्व ग्राह्यमित्यर्थः। षष्ठ कुलित्थाञ्जनमित्युक्तं राजनिघण्टौ—

कुलित्था दृक्प्रसादा च चक्षुष्या च कुलित्थका ।
कुकुलाली लोकहिता कुम्भकारी मलापहा ॥ १६ ॥

अथ कुलित्थगुणाः—

कुलित्थिका तु चक्षुष्या कषाया कटुका हिमा ।
विषविस्फोटकण्डूतिव्रणदोषनिबर्हणी ॥ १७ ॥

इति वनकुलित्थाञ्जनं, 'चाकसू' इति पाश्चात्याः, 'चिमड' इति भाषा। निस्तुषीकृतवनकुलित्था चूर्ण पटेन संशोध्य शिशूना नेत्ररोगे योजनीयम् ।

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे सप्तमोऽध्याय ॥ ७ ॥

---

## अथाष्टमोऽध्यायः ।

### अथ टङ्कणक्षार ।

'सुहागा' इति भाषा। तस्य नामलक्षणगुणशुद्धिः—

सौभाग्यं टङ्कणक्षारो धातुद्रावकमुच्यते ।
टङ्कणोऽग्निकरो रूक्षः कफघ्नो वातपित्तकृत् ॥ १ ॥

अशुद्धटङ्कणगुणाः—

अशुद्धष्टङ्कणो वान्तिभ्रान्तिकारी प्रयोजितः ।
अतस्तं शोधयेदेव वह्नावुत्फुल्लितः शुचिः ॥ २ ॥

अथ गुणान्तरम् ।—

टङ्कणो वह्निकृत्स्वर्णरूप्ययोः शोधनः परः ।
विषदोषहरो हृद्यो वातश्लेष्मविकारनुत् ॥ ३ ॥
अपरो नीलकण्ठाख्यष्टङ्कणः पूर्वटङ्कणात् ।
श्रेष्ठो नीलच्छविः किंचिच्छोधनं तस्य पूर्ववत् ॥ ४ ॥

### अथ राजावर्तः ।

'लाजावर्त' (लाजवर्द) इति भाषा, 'रेवटी' इति च ।

राजावर्तः स्मृतः कैश्चिद्बुधैरुपरसे तथा ।
रत्नजातौ स्मृतः कैश्चिल्लक्षणं तस्य कथ्यते ॥ ५ ॥
राजावर्तो द्विधा प्रोक्तः सरक्तो नीलिमाश्रितः ।
गुरुः श्रेष्ठः स कथितस्तदन्यो हीन उच्यते ॥ ६ ॥

गुणाः—

राजावर्तः कटुस्तिक्तः शिशिरः पित्तनाशनः ।
प्रमेहनाशकः प्रोक्तश्छर्दिहिक्कानिवारणः ॥ ७ ॥

अथ शोधनमारणम् ।—

गन्धाश्ममातुलुङ्गाम्लशृङ्गवेररसेन च ।
विशुध्यति म्रियते च पुटितो नात्र संशयः ॥ ८ ॥

अथ सत्त्वपातनम्—

मनःशिलाज्यसंमिश्रः पाच्यः पात्रे हि लोहजे ।
पश्चाच्च महिषीक्षीरे सौभाग्यपञ्चकान्वितः ॥ ९ ॥
एकीकृत्याथ पिण्डं तु कृत्वा मूषानिवेशितम् ।
ध्मातस्तु खदिराङ्गारैः सत्त्वं मुञ्चति तद्गतम् ॥ १० ॥

### अथ चुम्बकः ।

स तु पाषाणजातिः । उक्तं च—

कान्तलोहाश्मभेदाः स्युश्चुम्बकभ्रामकादयः ।
चुम्बकः कान्तपाषाणोऽयस्कान्तो लोहकर्षकः ॥ ११ ॥

अथ गुणाः—

चुम्बको लेखनः शीतो मेदोविषजरापहः ।
कण्डूपाण्डूदरक्षैण्यमोहमूर्च्छायरोगहृत् ॥ १२ ॥

अथास्य शोधनमुपयोगश्च—

सौभाञ्जनरसे साम्लवर्गे दोलागतो दिनम् ।
पाचितः शुध्यते कान्तपाषाणः पारदोपकृत् ॥ १३ ॥

### अथ स्फटिका ।

'फिटिकडी'इति भाषा । तस्या नामलक्षणगुणशोधनानि—

स्फटिका च स्फटी प्रोक्ता श्वेता शुभ्रा च रङ्गदा ।
दृढरङ्गा रङ्गदृढा रङ्गाङ्गा चापि कथ्यते ॥ १४ ॥

अथ गुणाः—

स्फटिका तु कषायोष्णा वातपित्तकफव्रणान् ।
निहन्ति श्वित्रवीसर्पान् योनिसंकोचकारिणी ॥ १५ ॥
स्फटिका निर्मला श्वेता श्रेष्ठा स्याच्छोधनं क्वचित् ।
न दृष्टं शास्त्रतो, लोका वह्नावुत्फुल्लयन्ति हि ॥ १६ ॥

### अथ शङ्खस्य नामलक्षणगुणशोधनानि ।

शङ्खः समुद्रजः कम्बुः क्षुद्रः शङ्खनकः स्मृतः ।
द्विधा स दक्षिणावर्तो वामावर्तः शुभेतरः ॥ १७ ॥
दक्षिणावर्तशङ्खस्तु पुण्ययोगादवाप्यते ।
यद्गृहे तिष्ठतेऽसौ वै स लक्ष्म्या भाजनं भवेत् ॥ १८ ॥
दक्षिणावर्तशङ्खस्तु त्रिदोषघ्नः शुचिर्निधिः ।
ग्रहालक्ष्मीक्षयक्ष्वेडक्षामताक्ष्यामयापहः ॥ १९ ॥

अथान्यः शङ्खः—

शङ्खः क्षारो हिमो ग्राही ग्रहणीरोगनाशनः ।
नेत्रपुष्पहरो वर्ण्यस्तारुण्यपिटिकाप्रणुत् ॥ २० ॥

अशुद्धो गुणदो नैष शुद्धोऽम्लैः स गुणप्रदः ।
शङ्खश्च विमलः श्रेष्ठश्चन्द्रकान्तिसमप्रभः ॥ २१ ॥

अम्लैः काञ्जिकादिभिर्दोलायन्त्रे स्विन्नः सन् शुध्यतीत्यर्थः ।

### अथ खटिका 'खडी' इति भाषा ।

खटिका खटिनी चापि लेखनी च निगद्यते ।
खटी गौरखटी चेति द्विधाऽऽद्या मलिना स्मृता ॥ २२ ॥
मृदुपाषाणसदृशी खटी शुभ्राऽधिका गुरुः ।
खटी दाहास्रनुच्छीता मधुरा विषशोथजित् ॥ २३ ॥
कफघ्नी नेत्रयोः पथ्या लेखने बालकोचिता ।
तद्वत्पाषाणखटिका व्रणपित्तास्रजिद्धिमा ॥ २४ ॥
लेपादेते गुणा प्रोक्ता भक्षिता मृत्तिकासमा ।
खटी गौरखटी द्वे च गुणैस्तुल्ये प्रकीर्तिते ॥ २५ ॥

### अथ गैरिकं 'गेरू' इति भाषा ।

गैरिकं रक्तधातुश्च गैरेयं गिरिजं तथा ।
द्विविध गैरिकं प्राहुः स्वर्ण सामान्यगैरिकम् ॥ २६ ॥
परैस्तृतीयमप्युक्तं पाषाणाख्यं हि गैरिकम् ।
सुवर्णगैरिकं रक्ततरं शिष्टं तु रक्तकम् ॥ २७ ॥

अथ गुणाः—

गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् ।
चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥ २८ ॥
अतिकण्डूहरं रूक्षं तथा प्रोक्तमुदर्दनुत् ।
पाषाणगैरिकं त्वन्यद्धिक्कालक्ष्मीविषापहम् ॥ २९ ॥
सुवर्णगैरिकं श्रेष्ठं गैरिकद्वितयात्परम् ।
गैरिकं किंचिदाज्येन भृष्टं शुद्धं प्रजायते ॥ ३० ॥

## अथ कासीसम्।

तत्तु भस्मवन्मृत्तिकाऽम्ला।

कासीसं धातुकासीस पांसुकासीसमित्यपि।
तदेव किंचित्पीतं तु पुष्पकासीसमुच्यते॥ ३१॥
कासीसद्वयमम्लोष्णं तिक्तं च तुवरं तथा।
वातश्लेष्महरं केश्यं नेत्र्यं कण्डूविषप्रणुत्॥ ३२॥
मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्तितम्।
सकृद्भृङ्गाम्बुना स्विन्नं कासीसं निर्मल भवेत्॥ ३३॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशेऽष्टमोऽध्याय॥ ८॥

---

## अथ नवमोऽध्यायः।

### अथ रसकः।

'खपरिया' इति परिभाषा॥

रसकं तुत्थभेदः स्यात्खर्परं चापि तत्स्मृतम्।
ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः॥ १॥
खर्परो द्विविधो ज्ञेयो दर्दुरः कारवेल्लकः।
सदलो दर्दुरः प्रोक्तो निर्दलः कारवेल्लकः॥ २॥
सत्त्वपाते दर्दुरः स्यादौषधे कारवेल्लकः।

अथ गुणाः—

रसकः सर्वमेहघ्नः कफपित्तविनाशनः॥ ३॥
नेत्ररोगक्षयघ्नश्च लोहपारदरञ्जनः।

अथान्यत्रापि—

खर्परं कटुकं क्षारं कषायं वामकं लघु॥ ४॥
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तनुत्।
विषाश्मकुष्ठकण्डूनां नाशनं परमं मतम्॥ ५॥

अन्यच्च—

नागार्जुनेन संदिष्टौ रसश्च रसकावुभौ ।
श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परौ ॥ ६ ॥
रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ ।
देहलोहमयी सिद्धिर्दासी तस्य न संशयः ॥ ७ ॥
अशुद्धः खर्परः कुर्याद्वान्ति भ्रान्ति विशेषतः ।
तस्माच्छोध्यः प्रयत्नेन यावद्वान्तिविवर्जितः ॥ ८ ॥

अथ शोधनम् ।—

नृमूत्रे वाऽथ गोमूत्रे जलाम्ले वा ससैन्धवे ।
सप्ताहं त्रिदिनं वाऽपि पक्वः शुध्यति खर्परः ॥ ९ ॥

अथ वाग्भटः—

खर्परः परिसंतप्तः सप्तवारं निमज्जितः ।
बीजपूररसस्यान्तर्निर्मलत्वं समश्नुते ॥ १० ॥

अथान्यच्च—

नृमूत्रे वाऽश्वमूत्रे वा तक्रे वा काञ्जिकेऽथवा ।
प्रताप्य मज्जित सम्यक् खर्परं परिशुध्यति ॥ ११ ॥

मतान्तरम्—

कटुकालाबुनिर्यासे आलोड्य रसकं पचेत् ।
शुद्धं दोषविनिर्मुक्तं पीतवर्णं च जायते ॥ १२ ॥

अथान्यच्च—

नरमूत्रे स्थितो मासं रसको रञ्जयेद्ध्रुवम् ।
शुद्ध ताम्रं रसं तारं शुद्धं स्वर्णप्रभं यथा ॥ १३ ॥

क्वचिदस्य भस्मप्रकार उक्तः—

खर्परं पारदेनैव चूर्णयित्वा दिनं पचेत् ।
वालुकायन्त्रमध्यस्थं शोणं भस्म प्रजायते ॥ १४ ॥

---

१ 'शोभन भस्म जायते' ग ।

अन्यच्च—

खर्परं पत्तलं कृत्वा लवणान्तर्गतं पचेत् ।
जायते शोभनं भस्म सर्वरोगापहं स्मृतम् ॥ १५ ॥

सत्त्वप्रकारस्तु—

लाक्षागुडासुरीपथ्याहरिद्रासर्जटङ्कणैः ।
सम्यक्संमर्द्य तत्पक्वं गोदुग्धेन प्लुतं तथा ॥ १६ ॥
वृन्ताकमूषिकामध्ये निरुध्य गुटिकाकृतिम् ।
ध्मात्वा ध्मात्वा समाकृष्य ढालयित्वा शिलातले ॥ १७ ॥
सत्त्वं वङ्गाकृति ग्राह्यं रसकस्य मनोरमम् । इति ॥

रसादिषु शोधयित्वैव देयम् ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

### अथ कपर्दिका ।

'कौडी' इति भाषा ॥

कपर्दिका कपर्दी च वराटी च वराटिका ।
वराटिका त्रिधा प्रोक्ता श्वेता शोणा त्रिधाऽपरा ॥ १ ॥
पीता सा चातिचक्षुष्या श्वेता शोणा हिमाऽव्रणा ।
असिता बिन्दुभिः श्वेतैर्लाञ्छिता रेखयाऽथवा ॥ २ ॥
बालग्रहहरी नानाकौतुकेषु च पूजिता ।
पीता गुल्मयुता पृष्ठे रसयोगेषु पूजिता ॥ ३ ॥
सार्धनिष्कप्रमाणाऽसौ श्रेष्ठा योगेषु युज्यते ।
निष्कप्रमाणा मध्या सा हीना पादोननिष्किका ॥ ४ ॥

अन्यत्रापि—

पीताभा ग्रन्थिला पृष्ठे दीर्घवृन्ता वराटिका ।
सार्धनिष्काभरा श्रेष्ठा निष्कभारा च मध्यमा ॥ ५ ॥

पादोननिष्कभारा च कनिष्ठा परिकीर्तिता ।
वराटाः काञ्जिके खिन्ना यामाच्छुद्धिमवाप्नुयुः ॥ ६ ॥

इति शोधनम् ॥

अङ्गाराग्नौ स्थिता ध्माता सम्यक्प्रोत्फुल्लिता यदा ।
स्वाङ्गशीता मृता सा तु पिष्ट्वा सम्यक् प्रयोजयेत् ॥ ७ ॥

इति भस्म ॥

कपर्दिका हिमा नेत्रहिता स्फोटक्षयापहा ।
कर्णस्रावाग्निमान्द्यघ्नी पित्तास्रकफनाशिनी ॥ ८ ॥

अन्यत्र—

कटूष्णा दीपनी वृष्या तिक्ता वातकफापहा ।
परिणामादिशूलघ्नी ग्रहणीक्षयहारिणी ।
रसेन्द्रजारणे प्रोक्ता विडद्रव्येषु शस्यते ॥ ९ ॥

### अथ सिकता ।

'वालु' इति भाषा ॥

वालुका सिकता प्रोक्ता शर्करा रेतिकाऽपि च ।
वालुका मधुरा शीता संतापश्रमनाशिनी ॥ १० ॥
स्वेदप्रयोगतश्चैव शाखाशैत्यानिलापहा ।
तद्वच्च लेखनी प्रोक्ता व्रणोरःक्षतनाशिनी ॥ ११ ॥
शर्कराभ्यश्चुम्बकेन केचिद्गृह्णन्त्ययोरजः ।
सुकरं त्विदमाख्यातं तच्च संशोध्य मारयेत् ॥ १२ ॥

इति सिकतालोहरजोग्रहणप्रकारः ॥

### अथ बोलस्य नामलक्षणगुणाः ।

बोलगन्धरसप्राणपिण्डगोपरसाः समाः ।
बोलं तु त्रिविधं प्रोक्तं रक्तं श्यामं मनुष्यजम् ॥ १३ ॥

गुणाः—

बोलं रक्तहरं शीतं मेध्यं दीपनपाचनम् ।
मधुरं कटुकं तिक्तं ग्रहखेदत्रिदोषनुत् ॥ १४ ॥

जरापस्मारकुष्ठघ्नं गर्भाशयविशोधनम्।
चक्षुष्यं च सरं प्रोक्तं रक्तबोलं भिषग्वरैः ॥ १५ ॥

इति रक्तबोलम् ॥

श्यामबोलं तीक्ष्णगन्धं दद्रुकण्डूविषापहम्।
कुष्ठापस्मारभग्नार्शोरक्तग्रन्थिं च नाशयेत् ॥ १६ ॥

इति श्यामबोलम् ॥

अथ तृतीयं श्यामबोलम्।—

अपरं मानुषं बोलं सद्योव्रणविषापहम्।
भग्नास्थिसन्धिजननं त्रिदोषशमनं हिमम् ॥ १७ ॥
धातुकान्तिवयःस्थैर्यबलौजोवृद्धिकारकम्।
प्रमेहकुष्ठपिटिकासर्वव्रणविषापहम् ॥ १८ ॥

इति मोमियाई ॥

### अथ कङ्कुष्ठोत्पत्तिनामलक्षणगुणाः।

हिमाचलैकदेशे तु कङ्कुष्ठमुपजायते।
तत्रैकं नलिकाख्यं स्यादन्यद्रेणुकनामकम् ॥ १९ ॥
पीतप्रभं गुरु स्निग्धं कङ्कुष्ठं शिलया समम्।
मृद्वतीव शलाकाभं सच्छिद्रं नलिकाभिधम् ॥ २० ॥
रेणुकाख्यं तु कङ्कुष्ठं श्यामपीतरजोन्वितम्।
त्यक्तसत्त्वं लघु प्रायः पूर्वस्माद्धीनवीर्यकम् ॥ २१ ॥

अथ नामानि—

कङ्कुष्ठं काककुष्ठं च वराङ्गं कोलवालुकम्।

अत्र केचित्।—

सद्योजातस्य करिणः शकृत्कङ्कुष्ठमुच्यते।
यद्वा सद्यः प्रसूतस्य वाजिबालस्य विट् स्मृतम् ॥ २२ ॥

नालं वा वाजिबालस्येत्येवं कङ्कुष्ठके भ्रमः ।
शुण्ठ्यम्बुभावित शुद्धि कङ्कुष्ठमुपगच्छति ॥ २३ ॥

अथ कङ्कुष्ठगुणाः ।—

कङ्कुष्ठ रेचनं तिक्तं कटूष्णं वर्णकारकम् ।
कृमिशोषोदराध्मानगुल्मानाहकफापहम् ॥ २४ ॥

अन्यच्च—

बब्बूलमूलिकाक्वाथजीरसौभाग्यटङ्कणम् ।
कङ्कुष्ठविषनाशाय भूयो भूयः पिबेन्नरः ॥ २५ ॥

### अथ सौराष्ट्री ।

'सोरठीमाती' इति भाषा ॥

सौराष्ट्री तुवरी काङ्क्षी मृत्तालकसुराष्ट्रजे ।
आढकी सापि च ख्याता मृत्स्ना च सुरमृत्तिका ॥ २६ ॥
स्फटिकाया गुणाः सर्वे सौराष्ट्र्यामपि कीर्तिताः ।
तस्मात्परस्पराभावे प्रयोज्याऽन्यतरा बुधैः ॥ २७ ॥

अथान्येऽप्युपरसाः सन्ति यथा—

### अथ समुद्रफेननामगुणशोधनम् ।

अब्धिफेनोऽब्धिसारः स्यादब्धिजश्च समुद्रजः ।
समुद्रफेनश्चक्षुष्यो लेखनः शीतलः सरः ॥ २८ ॥
कर्णस्रावरुजागूत्थहरः पाचनदीपनः ।
अशुद्धः स करोत्यङ्गभङ्गं तस्माद्विशोधयेत् ।
समुद्रफेनः संपिष्टो निम्बुतोयेन शुध्यति ॥ २९ ॥

इति समुद्रफेनः ॥

### अथ क्षुद्रशङ्खः ।

'क्षुद्रशंखः' 'घोंघा' इति भाषा । तन्नामगुणाः—

क्षुद्रशङ्खाः शङ्खनकाः शम्बूका जलशुक्तयः ।
शम्बूकः शीतलो नेत्ररुजास्फोटविनाशनः ॥ ३० ॥

शीतज्वरहरस्तीक्ष्णो ग्राही दीपनपाचनः ।
ग्रहणीरोगहन्ता च रक्तातीसारनाशनः ॥ ३१ ॥

अस्य शुद्धिस्तु महाशङ्खवद्बोध्या ॥ २ ॥

अथ शुक्तिः ।

'शिपी' 'छिप' इति भाषा। तन्नामानि यथा राजनिघण्टौ—

शुक्तिर्मुक्ताप्रसूश्चैव महाशुक्तिश्च शुक्तिका ॥
मुक्तास्फोटोऽब्धिमण्डूकीमौक्तिकप्रसवा च सा ।
ज्ञेया मौक्तिकसूर्मुक्तामाता मौक्तिकमन्दिरम् ॥ ३२ ॥

अथ गुणाः—

मुक्ताशुक्तिः कटुः स्निग्धा श्वासहृद्रोगहारिणी ।
शूलप्रशमनी रुच्या मधुरा दीपनी परा ॥ ३३ ॥

जलशुक्तिकानामानि—

जलशुक्तिर्वारिशुक्तिः क्रमिभूः क्षुद्रशुक्तिका ।
जम्बूका जलशुक्तिश्च पुटिका तोयशुक्तिका ॥ ३४ ॥

अथ गुणाः—

जलशुक्तिः कटुः स्निग्धा दीपनी गुल्मशूलनुत् ।
विषदोषहरा रुच्या पाचनी बलदायिनी ॥ ३५ ॥

अनयोः शोधनं गुणाश्च—

शुक्तिस्तु शिशिरा पित्तरक्तज्वरविनाशिनी ।
शोधनं शङ्खवत्तस्य मृतिः प्रोक्ता कपर्दवत् ॥ ३६ ॥

अथ कृष्णमृत्तिकानामगुणाः ।

'कालीमाती' इति भाषा ।

मृन्मृत्तिका प्रशस्ता तु मृत्स्ना मृत्सा च मृत्तिका ।
कृष्णमृत्क्षतदाहास्रप्रदरश्लेष्मपित्तनुत् ॥ ३७ ॥

अथ पङ्कः ।

'कादव' इति भाषा । तन्नामगुणाः—

पङ्कः कर्दम इत्युक्तो जम्बलः पङ्किलस्तथा ।
पङ्को दाहास्रपित्तार्तिशोफघ्नः शीतलः सरः ॥ ३८ ॥

## अथ कम्पिल्लकः ।

'कपिला' इति लोके ॥

सौराष्ट्रदेशे संजातः कम्पिल्लस्तस्य लक्षणम् ।
इष्टकाचूर्णसदृश. स विरेकी हि कथ्यते ॥ ३९ ॥

उक्तं च राजनिघण्टौ—

कम्पिल्लकोऽथ रक्ताङ्गो रेची रेचनकस्तथा ।
रञ्जको लोहिताङ्गश्च कम्पिल्लो रक्तचूर्णकः ॥ ४० ॥

इति नामानि ॥

अथ गुणाः—

कम्पिल्लको विरेची स्यात्कटूष्णो व्रणनाशनः ।
कफकासार्तिहारी च जन्तुकृमिहरो लघुः ॥ ४१ ॥

## अथ गौरीपाषाणः ।

'सोमल' इति भाषा ॥

गौरीपाषाणकः प्रोक्तो द्विविधः श्वेतपीतकः ।
श्वेतः शङ्खसदृक्पीतो दाडिमाभः प्रकीर्तितः ॥ ४२ ॥
श्वेतः कृत्रिमकः प्रोक्तः पीतः पर्वतसंभवः ।
विषकृत्यकरौ तौ हि रसकर्मणि पूजितौ ॥ ४३ ॥

## अथ नवसादरः ।

नवसारः समाख्यातश्चूल्हिकालवणाभिधः ।
इष्टकापाकदहने जायते पाण्डुरप्रभः ॥ ४४ ॥
मनुष्यसूकराणा च विष्ठान्तः किट्टवद्भवेत् ।
क्षारेषु गणना तस्य स्वर्णशोधनक परः ॥ ४५ ॥
शङ्खद्रावरसे पूज्यो मुखकर्मणि पारदे ।
विड्द्रव्योपयोगी च क्षारवत्तद्गुणाः स्मृताः ॥ ४६ ॥

### अथाग्निजार इति क्षारविशेषः।

अब्धितीरेऽग्निनक्रस्य जरायुः शुष्कता गतः।
अग्निजारस्तु संप्रोक्तः स क्षारो जारणे हितः॥ ४७॥

### अथ गिरिसिन्दूरम्।

गिरिसिन्दूरकं यत्तु गिरौ पाषाणजं भवेत्।
किंचिद्धिङ्गुलतुल्याभं रसबन्धे हितं मतम्।
धातुवादेऽपि तत्पूज्यं नेत्ररोगघ्नमीरितम्॥ ४८॥

### अथ बोदारशृङ्गम्।

'मुद्दारशिंगी' इति भाषा॥

बोदारशृङ्गक प्रोक्तं द्विविधं पीतपाण्डुरम्।
सदलं निर्दलं तस्य जनिर्गुर्जरमण्डले॥ ४९॥
अर्बुदाख्यगिरेः पार्श्वे सीससत्त्वसमं परम्।
केश्य पुरुषरोगघ्नं रञ्जनं रसबन्धकम्॥ ५०॥

उक्तं च।—

कम्पिल्लाश्चपलो गौरीपाषाणो नवसादरः।
वह्निजारोऽथ सिन्दूरं साधारणरसाः स्मृताः॥ ५१॥

अथैषा शोधनम्।—

साधारणरसाः सर्वे मातुलुङ्गार्द्रकाम्बुना।
त्रिवारं भाविताः शुष्का भवेयुर्दोषवर्जिताः॥ ५२॥
महारसः स एव स्याद्गन्धाद्युपरसाः स्मृताः।
गन्धको वज्रवैक्रान्तौ सिन्दूर बोलगैरिकम्॥ ५३॥
समुद्रफेनः खटिकाद्वयं शम्बूकतार्क्ष्यजौ।
कासीसं कान्तपाषाणो वराटी शुक्तिहिङ्गुलाः॥ ५४॥
कङ्कुष्ठं शङ्खभूनागौ टङ्कणं च शिलाजतु।
उक्ता उपरसा एते द्रव्यनिर्णयकारिभिः॥ ५५॥

अन्ये तु—

अभ्रवैक्रान्तमाक्षीकविमलाद्रिजसस्यकम् ।
चपलो रसकश्चेति ज्ञात्वाऽष्टौ संहरेद्रसान् ॥ ५६ ॥
गन्धाश्मगैरिके काङ्क्षीकासीसालशिलाञ्जनम् ।
कङ्कुष्ठं चेत्युपरसा अष्टौ पारदकर्मणि ॥ ५७ ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे दशमोऽध्याय ॥ १० ॥

---

## अथैकादशोऽध्यायः ।

### अथ धातूपधातुनिर्णय ।

सुवर्ण रूप्यक ताम्रं वङ्गं जसदसीसकम् ।
लोहं चैते मताः सप्त धातवो गिरिसंभवाः ॥ १ ॥

अथ धातुशब्दस्य निरुक्तिः—

वलीपलितखालित्यकार्श्यावल्यजरामयान् ।
निवार्य देहं दधति नृणा तद्धातवो मताः ॥ २ ॥

अथ सूर्यादिग्रहाणा धात्वाधिपत्य व्यवहारार्थमाह—

ताम्रतारारनागाश्च हेमवङ्गौ च तीक्ष्णकम् ।
कास्यकं वर्तलोहं च धातवो नव ये स्मृताः ॥ ३ ॥
सूर्यादीना ग्रहाणा ते कथिता नामभिः क्रमात् ।
ताप्यं च विमला तुत्थं कांस्यं पित्तलकं तथा ॥ ४ ॥
सिन्दूरं शैलनिर्यासः स्मृताः सप्तोपधातव. ।
स्वस्वधातुगुणैस्तुल्याः कियद्भिरपरेऽपि च ।
गुणाः सन्ति विशेषेण द्रव्यान्तरसयोगजाः ॥ ५ ॥

**अथ सुवर्णस्योत्पत्तिनामलक्षणगुणशोधनमारणानि ।**

पुरा निजाश्रमस्थाना सप्तर्षीणा जितात्मनाम् ।
पत्नीर्विलोक्य लावण्यलक्ष्मीः संपन्नयौवनाः ॥ ६ ॥

कन्दर्पदर्पविध्वस्तचेतसो जातवेदसः।
पतित यद्धरापृष्ठे रेतस्तद्धेमतामगात् ॥ ७ ॥
कृत्रिमं चापि भवति तद्रसेन्द्रस्य वेधतः।
मेरुसानुपतज्जम्बूफलाम्भोयोगतः परम् ॥ ८ ॥
दिव्यौषधिमणिस्पर्शादन्यद्भवति काञ्चनम्।
एवं नानाविधानीह जायन्ते काञ्चनानि वै ॥ ९ ॥

उक्त च—

सुवर्ण पञ्चधा ख्यातं प्राकृतं सहज परम्।
वह्निजं खनिजं तद्वद्रसेन्द्रवेधसंभवम् ॥ १० ॥
ब्रह्माण्डं संवृतं येन प्रकृत्या प्राकृतं च तत्।
ब्रह्मा येन सहोत्पन्नः सहज हेम तत्स्मृतम् ॥ ११ ॥
वह्निजं तु समाख्यातमेतानि दुर्लभानि हि।
मनु(१४)वर्ण लोकसिद्धं प्रायशः खनिजं हि यत् ॥ १२ ॥
तत्स्वर्ण मारणार्थ तु ग्राह्यं लक्षणलक्षितम्।
वर्णमृत्तिकया लिप्त्वा मुनिशो[1] ध्मापितं वसु।
विशुध्यति वरं किंचिद्वर्णवृद्धिश्च जायते ॥ १३ ॥

यया कुम्भकाराः भाण्डानि रञ्जयित्वा पाचयन्ति सा वर्णमृत्तिकेत्युच्यते, 'कावीस' इति भाषा। मतान्तरम्—

वल्मीकमृत्तिका धूमं गैरिकं चेष्टिका पटु।
इत्येता मृत्तिकाः पञ्च जम्बीरैरारनालकैः ॥ १४ ॥
पिष्ट्वा कण्टकवेध्यानि स्वर्णपत्राणि लेपयेत्।
पुटेत्पृथुहसन्त्यां तु निर्वाते विंशदुत्पलैः ॥ १५ ॥
अधिकैर्वाऽधिके हेम्नि यावद्वर्णो विवर्धते।
इत्येवं पुटनैर्युक्त्या सम्यक् शुध्यति काञ्चनम् ॥ १६ ॥

---

१ मुनिश सप्तवारम्।

मतान्तरम् ।—

मृत्तिकाः पञ्च लुङ्गाम्लैः पञ्चवासरभाविताः ।
सभसलवणा हेम्नः शोधन्यः पुटपाकतः ॥ १७ ॥

अन्यच्च—

सुवर्णमुत्तमं वह्नौ विद्रुतं निक्षिपेत्त्रिशः ।
काञ्चनाररसे शुद्धं काञ्चन जायते भृशम् ॥ १८ ॥

इति स्वर्णशोधनम् । अत्र केचित् ।—

इयमेव सुवर्णस्य शुद्धिर्नान्या हि विद्यते ।
तैले तक्रादिके या तु रूप्यादीनामुदाहृता ॥ १९ ॥

अथ स्वर्णनामानि—

स्वर्ण सुवर्ण कनकं हिरण्यं हेम हाटकम् ।
तपनीयं कलधौतं गाङ्गेयं भर्म काञ्चनम् ॥ २० ॥
चामीकरं शातकुम्भ तथा कार्तस्वरं च तत् ।
जाम्बूनदं जातरूपं महारजतमित्यपि ॥ २१ ॥

अथ सदसत्सुवर्णलक्षणम्—

दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् ।
तारशुल्बोज्झितं स्निग्धं कोमल गुरु हेम सत् ॥ २२ ॥
यच्छ्वेतं कठिणं रूक्षं विवर्ण समल दलम् ॥
दाहे छेदे सितं, श्वेतं कषे त्याज्यं लघु स्फुटम् ॥ २३ ॥

दलं नाम यद्घनाहतं स्फुटति । अथ स्वर्णगुणाः—

स्वर्ण स्निग्धकषायतिक्तमधुरं दोषत्रयध्वंसन
शीतं स्वादु रसायनं च रुचिकृच्चक्षुष्यमायुष्यदम् ।
प्रज्ञावीर्यबलस्मृतिस्वरकरं कान्ति विधत्ते तनोः
संधत्ते दुरितक्षयं श्रियमिदं धत्ते नृणा धारणात् ॥२४॥
दाहेऽतिरक्तमथ यत्सासितं छिदाया
काश्मीरकान्ति च विभाति निकाषपट्टे ।

स्निग्धं च गौरवमुपैति च यत्तुलाया
ग्राह्यं तदेव कनक मृदु रक्तपीतम् ॥ २५ ॥

अन्यच्च—

सुवर्ण शीतल वृष्यं बल्यं गुरु रसायनम्।
स्वादु तिक्तं च तुवरं पाके च स्वादु पिच्छिलम् ॥ २६ ॥
पवित्र बृंहणं नेत्र्यं मेधास्मृतिमतिप्रदम्।
हृद्यमायुष्करं कान्तिवाग्विशुद्धिस्थिरत्वकृत् ॥ २७ ॥
विषद्वयक्षयोन्मादत्रिदोषज्वरशोकजित्।
अपक्कमेव संशुद्धं, पक्कं तत्तु रसायनम् ॥ २८ ॥

अत्र पक्कापक्कप्रयोगविवेको रसपद्धत्याम्।—

पक्कं हेम रसायनं विदुरथापक्कं तु सद्योविष-
प्रध्वंसि क्षयिबृंहण क्रमिहर वर्ण्यं ज्वरिभ्यो हितम्।
रूप्याद्येषु विमृश्यवादिभिरुपक्षिप्तोऽस्त्यपक्के गुण-
स्ताम्र चापि विषार्तिहृन्निगदितं वैद्यैपरक्क ध्रुवम् ॥२९॥

दृश्यते च वाग्भटे—

विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा।
सूक्ष्मं ताम्ररजः काले सक्षौद्र हृद्विशोधनम् ॥ ३० ॥
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत्।
न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ॥ ३१ ॥

अथापक्कसुवर्णसेवने प्रकारद्वयमुक्तं तत्रान्तरे, तद्यथा—

अपक्क हेम संघृष्टं शिलायां जलयोगतः।
द्रवरूपं तु तत्पेय मधुना गुणदायकम् ॥ ३२ ॥
यद्वाऽपि तबका(वरका)ख्यं तु स्वर्णपत्रं विचूर्णितम्।
मधुना संगृहीतं चेत्सद्यो हन्ति विषादिकम् ॥ ३३ ॥

इत्यादि ज्ञेयम् ॥

अन्यच्च गुणविशेषादिकमाह—

सर्वौषधिप्रयोगेण व्याधयो न गता हि ये ।
कर्मभिः पञ्चभिश्चापि सुवर्णं तेषु योजयेत् ॥ ३४ ॥
शिलाजतुप्रयोगैस्तु ताप्यसूतकयोस्तथा ।
अन्यै रसायनैश्चापि प्रयोगो हेम्न उत्तमः ॥ ३५ ॥

अथानुपानमाह—

मध्वामलकचूर्णं तु सुवर्णं चेति तत्त्रयम् ।
प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंकटात् ॥ ३६ ॥
मेधाकामस्तु वचया श्रीकामः पद्मकेसरैः ।
शङ्खपुष्प्या वयोर्थी च विदार्या च प्रजार्थकः ॥ ३७ ॥

अथाशुद्धस्यासम्यङ्मारितस्य गुणाः—

बलं च वीर्यं हरते नराणां रोगव्रजं पोषयतीह काये ।
असौख्यकार्येव सदा सुवर्णमशुद्धमेतन्मरणं च कुर्यात्॥३८

असम्यङ्मारितं स्वर्णं बलं वीर्यं च नाशयेत् ।
करोति रोगान्मृत्युं च तद्धन्याद्यत्नतस्ततः ॥ ३९ ॥

अथ स्वर्णादीनां मात्राकथनम् ।—

यववृद्ध्या प्रयोक्तव्यं हेम गुञ्जाष्टकं, रविः ।
तारं तद्द्विगुणं, लोहमन्यत्तु त्रिगुणाधिकम् ॥ ४० ॥
गुञ्जामेकां समारभ्य यावत्स्युर्नवरक्तिकाः ।
तावल्लोहं समश्नीयाद्यथादोषबलं नरः ॥ ४१ ॥

अथ स्वर्णादिमारणे कियती परिभाषोच्यते, उक्तं च—

रसीभवन्ति लोहानि मृतानि सुरवन्दिते ।
विनिघ्नन्ति जराव्याधीन् रसयुक्तानि किं पुनः ॥ ४२ ॥
लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना ।
मूलीभिर्मध्यमं प्राहुः कनिष्ठं गन्धकादिभिः ॥ ४३ ॥

अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम्।
रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ॥ ४४ ॥
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम्।
पुटनात् स्याल्लघुत्वं च शीघ्रव्याप्तिश्च[1] दीपनम्।
जारितादपि सूतेन्द्राल्लोहानामधिको गुणः ॥ ४५ ॥

अन्यच्च—

स्वर्णरूप्यवधे ज्ञेयं पुटं कुक्कुटकादिकम्।
ताम्रे काष्ठादिजो वह्निर्लोहे गजपुटानि च ॥ ४६ ॥

अथ स्वर्णादिधातूनां लोहत्वेन व्यवहार इत्याह रसपद्धतिकारः—

रुक्मं रूप्यमयांसि शुल्बमुरगं वङ्गं घनं वर्तकं
घोषं लोहमिदं त्रयं च चरमं नाम्नोपलोहं जगुः।

अथैषां शोधनमाह—

तक्रे काञ्जिकमूत्रयोस्तिलभवे तैले कुलित्थाम्भसि
स्याच्छुद्धं परिवर्त्य लोहमखिलं त्रिःसप्तधा वापितम् ॥

अथ व्याख्या—रुक्मं सुवर्णं, रूप्यं रजतं, अयांसि कान्ततीक्ष्णमुण्डाख्यानि, भेदाभिप्रायेण बहुवचनं, शुल्बं ताम्रं, उरगं सीसं, वङ्गं त्रपु, घनं कांस्यं, वर्तकं पित्तलजातिभेदः, घोषं पञ्चरसं, इदमखिलं लोहं, तत्र रुक्मादिषट्कं मुख्यं लोहं, अन्त्यत्रयं घनादि तूपलोहं जगुः रसज्ञा इत्यर्थः। परिवर्त्य द्रवीकृत्य। त्रिःसप्तधा एकविंशतिवारम्। अखिलं स्वर्णादि घोषान्तम्। मतान्तरम्—

सुवर्णरूप्यताम्रायःपत्राण्यग्नौ प्रतापयेत्।
कृत्वा कण्टकवेधीनि दृष्ट्वा वह्निसमानि च ॥ ४८ ॥

---

१ 'शीघ्र व्याधेश्च नाशनम्' ग।

निषिञ्चेत्तप्ततप्तानि तैले तक्रे गवां जले ।
काञ्जिके च कुलित्थाना कषाये सप्तधा पृथक् ॥ ४९ ॥
एव स्वर्णादिलोहानां विशुद्धिः संप्रजायते ।
तीक्ष्णादिलोहकिट्टं तु संशोध्यं लोहवद्बुधैः ॥ ५० ॥

अथ नागवङ्गयोर्विशेषमाह—

नागवङ्गौ प्रतप्तौ च गालितौ तौ निषेचयेत् ।
सच्छिद्रश्रावपिहिते हण्डिकास्थे द्रवे शनैः ।
सप्तधैव विशुद्धिः स्याद्रविदुग्धे च सप्तधा ॥ ५१ ॥

अन्यमतम्—

सर्वलोहानि तप्तानि कदलीमूलवारिणि ।
सप्तधाऽभिनिषिक्तानि शुद्धिमायान्त्यथोत्तमाम् ॥ ५२ ॥

अथ स्वर्णमारणम्—

सिद्धलक्ष्मीश्वरप्रोक्तप्रक्रियाकुशलो भिषक् ।
लोहानां सरसं भस्म सर्वोत्कृष्टं प्रकल्पयेत् ॥ ५३ ॥
शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सप्त धातवः ।
म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा ॥ ५४ ॥

इति सर्वधातुमारण सामान्येन ॥

स्वर्णस्य द्विगुणं सूतमम्लेन सह मर्दयेत् ।
तद्गोलकसमं गन्धं निदध्यादधरोत्तरम् ॥ ५५ ॥
चूर्णीकृतं ततो रुद्ध्वा शरावद्वयसंपुटे ।
सवस्त्रया कुट्टितया मृदा संवेष्ट्य यत्नतः ॥ ५६ ॥
त्रिंशद्वनोपलैर्दद्यात्पुटान्येवं चतुर्दश ।
निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ॥ ५७ ॥

इति द्विगुणरसयुक्तं सर्वोत्कृष्टं हेमभस्म । अथान्यमतम्—

शुद्धसूतसमं स्वर्णं खल्वे कृत्वा तु गोलकम् ।
ऊर्ध्वाधो गन्धकं दत्त्वा सर्वतुल्यं निरुध्य च ॥ ५८ ॥

त्रिशद्वनोपलैर्देयाः पुटा ह्येवं चतुर्दश ।
निरुत्थं हेमभस्म स्याद्गन्धो देयः पुनः पुनः ॥ ५९ ॥
अत्रानुक्तमपि ज्ञेयं गोलकीकरणे बुधैः ।
जम्बीरद्रवदानं तु सर्वत्रैवं विनिश्चयः ॥ ६० ॥

इति सरसं हेमभस्म । अथान्यः प्रकारः—

सुवर्णेऽग्नौ द्रुते सूतं दद्यात्सीसं कलाशकम् ।
अम्लेन मर्दयेत्तत्तु चूर्णयित्वा शनैः शनैः ॥ ६१ ॥
पश्चात्तद्गोलकं कृत्वा तुल्यगन्धरजोगतम् ।
शरावसंपुटे स्थाप्य संधिरोधं विधाय च ॥ ६२ ॥
त्रिशद्वनोपलैः पच्यात्सप्तधैव पुनः पुनः ।
अम्लेन गोलकं कृत्वा पचेत्स्वर्णमृतिर्भवेत् ॥ ६३ ॥

अथान्यः प्रकारः—

रसस्य भस्मना वाऽथ रसेनालेप्य वै दलम् ।
हिङ्गुहिङ्गुलसिन्दूरशिलासाम्येन मेलयेत् ॥ ६४ ॥
संमर्द्य काञ्चनद्रावैर्दिनं कृत्वाऽथ गोलकम् ।
तं भाण्डस्य तले दत्त्वा भस्मना पूरयेद्दृढम् ॥ ६५ ॥
अग्निं प्रज्वालयेद्गाढं द्युनिशं स्वाङ्गशीतलम् ।
उद्धृत्य सावशेषं चेत्पुनर्देयं पुटद्वयम् ।
निरुत्थं जायते भस्म सर्वकर्मसु योजयेत् ॥ ६६ ॥

इति हेमभस्म ॥

अथान्यप्रकारः—

काञ्चनाररसैर्घृष्ट्वा समसूतकगन्धयोः ।
कज्जलीं हेमपत्राणि लेपयेत्समया तया ॥ ६७ ॥
काञ्चनाररजःकल्कैर्मूषायुग्मं प्रकल्पयेत् ।
धृत्वा तत्संपुटे गोलं मृन्मूषासंपुटे ततः ॥ ६८ ॥

निधाय सन्धिरोधं च कृत्वा संशोष्य गोलकम् ।
वह्नि खरतर कुर्यादेवं दद्यात्पुटत्रयम् ।
निरुत्थं जायते भस्म सर्वकर्मसु योजयेत् ॥ ६९ ॥

इति हेमभस्म ॥

काञ्चनारप्रकारेण लाङ्गली हन्ति काञ्चनम् ।
ज्वालामुखी तथा हन्यात्तथा हन्ति मनःशिला ॥ ७० ॥

लाङ्गली कलिहारी । इति हेमभस्म ॥

शिलासिन्दूरयोश्चूर्ण समयोरर्कदुग्धकैः ।
सप्तधा भावयित्वा तु शोषयेच्च पुनः पुनः ॥ ७१ ॥
ततस्तु गालिते हेम्नि कल्कोऽयं दीयते सम ।
पुनर्धमेदतितरा यथा कल्को विलीयते ॥ ७२ ॥
एव वेलात्रय दद्यात्कल्कं हेममृतिर्भवेत् ।

इति रसवर्ज हेमभस्म । अथ स्वर्णभस्मपरीक्षा—

जाम्बवाभ सुवर्णस्य भस्म प्राहुर्भिषग्वराः ॥ ७३ ॥

अथ सुवर्णद्रुतिः ।—

चूर्ण सुरेन्द्रगोपाना देवदालीफलद्रवैः ।
भावित सदृशं हेम करोति जलवद्द्रुतिम् ॥ ७४ ॥
मण्डूकास्थिवसाटङ्कहयलालेन्द्रगोपकैः ।
प्रतीवापेन कनकं सुचिरं तिष्ठति द्रुतम् ॥ ७५ ॥

**अथ रूप्यस्योत्पत्तिनामलक्षणगुणशोधनमारणानि ।**

त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः ।
निरीक्षयामास शिवः क्रोधेन परिपूरितः ॥ ७६ ॥
ततस्तूल्का समभवत्तस्यैकस्माद्विलोचनात् ।
अपरस्माद्वीरभद्रो गणो वह्निरिव ज्वलन् ॥ ७७ ॥
तृतीयो ह्यश्रुबिन्दुस्तु लोचनादपतद्भुवि ।

तस्माद्रजतमुत्पन्नं नानाभूमिषु संस्थितम् ।
कृत्रिमं चापि भवति वङ्गादेः सूतयोगतः ॥ ७८ ॥

अन्ये तु—

रूप्यं त्रिधा स्यात्सहजं कृत्रिमं खनिसंभवम् ।
कैलासादिस्थितं यद्धि सहजं रजतं हि तत् ॥ ७९ ॥
रसेन्द्रवेधसंजातं संप्रोक्तं कृत्रिमं च तत् ।
हिमाचलादिभूमौ च जायते खनिजं च तत् ॥ ८० ॥
मारणार्थं लोकसिद्धं ग्राह्यं लक्षणलक्षितम् ।
गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षमम् ॥ ८१ ॥
वर्णाढ्यं चन्द्रवत्स्वच्छं रूप्यं नवगुण शुभम् ।
कृत्रिमं कठिनं रूक्षं रक्तं पीतं दलं लघु ॥ ८२ ॥

गुणाः—

रूप्यं शीतं कषायाम्लं स्वादुपाकरसं सरम् ।
वयसः स्थापनं स्निग्धं लेखन वातपित्तजित् ॥ ८३ ॥
प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम् ।
गुटिकाऽस्य धृता वक्त्रे तृष्णाशोषविनाशनी ॥ ८४ ॥

रसपद्धत्याम्—

अपक्वरजतं नैव संयोज्य स्वर्णवद्वदे ।
पक्वं भस्मापि तन्नैव योज्यं ताम्रादिभस्मवत् ॥ ८५ ॥
व्यवहाराभावतः किंच श्वेतकुष्ठहरं हि तत् ।
इति लोकप्रसिद्धिस्तु तस्माद्योज्यं रसादिषु ॥ ८६ ॥

गुणग्रन्थेऽपि क्वचित्—

प्रोक्तकर्मसु संयोज्यं रजतं हि विधानतः । इति ॥

अथाशुद्धरजतमारणे दोषमाह—

तारं शरीरस्य करोति तापं विड्बन्धतां यच्छति शुक्रनाशम् ।
वीर्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम् ॥

अथ रजतमारणम् । तत्रास्य विशेषशोधनम् । उक्तं च—

तैलतक्रादिशुद्धस्य रजतस्य विशेषतः ।
शोधनं मुनिभिः प्रोक्तं तद्यथावन्निगद्यते ॥ ८८ ॥
पत्रीकृतं तु रजतं प्रतप्तं जातवेदसि ।
निर्वापितमगस्त्यस्य रसे वारत्रयं शुचि ॥ ८९ ॥
तारं तप्तं त्रिधा क्षिप्तं तैले ज्योतिष्मतीभवे ।
खर्परे भस्मचूर्णाभ्यां परितः पालिकां चरेत् ॥ ९० ॥
तत्र रूप्यं विनिक्षिप्य समसीससमन्वितम् ।
जातसीसक्षयं यावद्धमेत्तावत्पुनः पुनः ।
इत्थं संशोधितं रूप्य मृतं योज्यं रसादिषु ॥ ९१ ॥

अथ मारणम्—

विधाय पिष्टिं सूतेन रजतस्याथ मेलयेत् ।
तालं गन्ध समं शुद्ध तन्मर्द्य निम्बुकद्रवैः ॥ ९२ ॥
गोलकीकृत्य संशुद्धं मूषाया स्वर्णवद्दृढम् ।
द्वित्रैः पुटैर्भवेद्भस्म योज्यमेतद्रसादिषु ॥ ९३ ॥

इति सरसं रूप्यभस्म । मतान्तरम्—

हिङ्गूलेन च माक्षिकेण बलिना तुल्येन जम्भाम्भसा
लिप्तं रौप्यदलं पुटेन पटुना स्याद्भस्म मूषास्थितम् ॥ ९४ ॥

पटुना पुटेन गजपुटेन । मतान्तरम्—

तारपत्रं तुर्यभागं भागैक शुद्धतालकम् ।
एतज्जम्बीरजद्रावैः कल्कीकृत्याखिल भिषक् ॥ ९५ ॥
तेन तारस्य पत्राणि लेपयेच्छोषयेत्ततः ।
शरावसंपुटे तेषामूर्ध्वाधो गन्धकं क्षिपेत् ॥ ९६ ॥
तारतुल्य ततस्तानि रुद्ध्वा गजपुटे पचेत् ।
त्रिंशदुत्पलकैर्वाऽपि विशद्भिस्तारपञ्चता ॥ ९७ ॥

भागैकं तालक मर्द्य याममम्लेन केनचित् ।
तेन भागत्रयं तारपत्राणि परिलेपयेत् ॥ ९८ ॥
धृत्वा मूषापुटे रुद्ध्वा पुटेत्रिंशद्वनोत्पलैः ।
समुद्धृत्य पुनस्तालं दत्त्वा रुद्ध्वा पुटे पचेत् ।
एव चतुर्दशपुटैस्तारं भस्म प्रजायते ॥ ९९ ॥

इति रूप्यभस्म ॥

स्नुहीक्षीरेण संपिष्टं माक्षिकं तेन लेपयेत् ।
तालकस्य प्रकारेण तारपत्राणि बुद्धिमान् ।
एवं चतुर्दशपुटैस्तार भस्म प्रजायते ॥ १०० ॥

इत्यपि रूप्यभस्म । इति रसं विना मध्यमं रूप्यभस्म । मतान्तरम्—

सूतगन्धकयोस्तारतुल्ययोः कज्जलीं भिषक् ।
द्रवीकृत्य कुमार्यद्भिस्तारपत्राणि लेपयेत् ॥ १०१ ॥
शरावसंपुटे रुद्ध्वा त्रिंशदुत्पलकैः पचेत् ।
द्विवारं रजतस्याशु भस्म स्यात् प्रायशः सितम् ॥ १०२ ॥

इत्यपि रससंयुक्तं रूप्यभस्म । अथ द्रुतिः—

शतधा नरमूत्रेण भावयेद्देवदालिकाम् ।
तच्चूर्णावापमात्रेण द्रुतिः स्यात्स्वर्णतारयोः ॥ १०३ ॥

## अथ ताम्रस्योत्पत्तिनामलक्षणगुणशोधन-मारणानि —

शुक्रं यत्कार्तिकेयस्य पतितं धरणीतले ।
तस्मात्ताम्रं समुत्पन्नमिदमाहु. पुराविदः ॥ १०४ ॥
ताम्र तु द्विविधं प्रोक्त नेपालं म्लेच्छनामकम् ।
अतिशोणं मृदुः, कृष्ण कठिनं, क्रमेशः स्मृतम् ॥ १०५ ॥

नामानि—

ताम्रमौदुम्बरं शुल्बमुदुम्बरमिति स्मृतम् ।
रविप्रियं म्लेच्छमुखं सूर्यपर्यायनामकम् ॥ १०६ ॥

लक्षणम्—

जपाकुसुमसंकाशं स्निग्ध मृदु घनक्षमम् ।
लोहनागोज्झितं ताम्र नेपालं मृत्यवे शुभम् ॥ १०७ ॥
कृष्णं रूक्षमतिस्तब्धं श्वेत चापि घनासहम् ।
लोहनागयुतं शुल्ब म्लेच्छ दुष्ट मृतौ त्यजेत् ॥ १०८ ॥

अन्यच्च—

न विष विषमित्याहुस्ताम्रं तु विषमुच्यते ।
एको दोषो विषे ताम्रे त्वष्टौ दोषाः प्रकीर्तिताः ॥ १०९ ॥
भ्रमो मूर्च्छा विदाहश्च स्वेदक्लेदनवान्तयः ।
अरुचिश्चित्तसंताप एते दोषा विषोपमाः ॥ ११० ॥
तैलतक्रादिशुद्धस्य तद्दोषविनिवृत्तये ।
शुल्बस्य शोधनं प्राज्ञैर्विशेषात्समुदाहृतम् ॥ १११ ॥

यथा—

स्नुह्यर्कक्षीरलवणैस्ताम्रपत्राणि लेपयेत् ।
अग्नौ प्रताप्य निर्गुण्डीरसे संसेचयेत्त्रिशः ।
स्नुह्यर्कक्षीरसेकैर्वा शुल्बशुद्धिः प्रजायते ॥ ११२ ॥

अन्यमतम्—

गोमूत्रेण पचेद्याम ताम्रपत्रं दृढाग्निना ।
साम्लक्षारेण संशुद्धि ताम्रमाप्नोति सर्वथा ॥ ११३ ॥

इति विशेषशुद्धिः । अथ मारणम्—

सूक्ष्माणि ताम्रपत्राणि कृत्वा संस्वेदयेद्बुधः ।
वासरत्रयमम्लेन ततः खल्वे विनिःक्षिपेत् ॥ ११४ ॥

पादांशं सूतकं दत्त्वा याममम्लेन मर्दयेत् ।
तत उद्धृत्य पत्राणि लेपयेद्द्विगुणेन च ॥ ११५ ॥
गन्धकेनाम्लघृष्टेन तस्य कुर्याच्च गोलकम् ।
ततः पिष्ट्वा च मीनाक्षी चाङ्गेरी वा पुनर्नवाम् ॥ ११६ ॥
तत्कल्केन बहिर्गोलं लेपयेद्व्यङ्गुलोन्मितम् ।
धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत् ॥ ११७ ॥
वालुकाभिः प्रपूर्याथ विभूतिलवणाम्बुभिः ।
दत्त्वा भाण्डमुखे मुद्रां, ततश्चुल्ल्या विपाचयेत् ॥ ११८ ॥
क्रमवृद्धाग्निना सम्यग्यावद्यामचतुष्टयम् ।
स्वाङ्गशीतं समुद्धृत्य मर्दयेत्सूरणद्रवैः ॥ ११९ ॥
यामैकं गोलकं तच्च निक्षिपेत्सूरणोदरे ।
मृदा लेपस्तु कर्तव्यः सर्वतोऽङ्गुलमात्रकः ॥ १२० ॥
पाच्यं गजपुटे क्षिप्तं मृतं भवति निश्चितम् ।
वमनं च विरेकं च भ्रम क्लममथारुचिम् ।
विदाहं स्वेदमुत्क्लेदं न करोति कदाचन ॥ १२१ ॥

चाङ्गेरी चतुष्पत्रा, मीनाक्षी हुनगुंदा पत्रशाकम् । इति ताम्रभस्म । अथान्यः प्रकारः—

ताम्रपादांशतः सूतं ताम्रतुल्यं तु गन्धकम् ।
मर्दयेद्यामयुग्मं तु यावत्कज्जलिका भवेत् ॥ १२२ ॥
तां तु कन्यारसैः पिष्ट्वा ताम्रपत्राणि लेपयेत् ।
संशुष्काणि ततस्तानि शेषकज्जलिकान्तरम् ॥ १२३ ॥
निक्षिप्य हण्डिकामध्ये शरावेण निरोधयेत् ।
सन्धिरोधं द्वयोः कुर्यादम्बुभस्मविलेपनम् ॥ १२४ ॥
हण्डिका पटुनाऽऽपूर्य भस्मना वा गलावधि ।
पिधाय चुल्ल्यामारोप्य वह्निं प्रज्वालयेद्दृढम् ॥ १२५ ॥
चतुर्यामं ततः स्वाङ्गशीतलं तत्समुद्धरेत् ।

अम्लपिष्टं मृतं ताम्रं सूरणस्थं लिपेन्मृदा ।
पचेत्पञ्चामृतैर्वाऽपि त्रिधा वान्त्यादिशान्तये ॥ १२६ ॥

अत्र गजपुटो बोध्यः । रसपद्धत्याम्—

जम्भाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापय शुल्बपत्रम् ।
पङ्कायमानं पुटयस्व युक्त्या वान्त्यादिकं यावदुपैति शान्तिम्॥

इति रससंयुक्तं ताम्रभस्म । रसपद्धत्याम्—

अर्धांशेन रसेन तुल्यबलिना जम्भाम्बुपिष्टेन च
लिप्त्वा ताम्रदलानि सस्तरचितान्यर्कस्य पक्वच्छदैः ।
भाण्डे रन्ध्रिणि तिन्तिणीकविटपत्वग्भस्मसपूरिते
घस्रैकं परिपाचितानि शुचिना तीव्रं म्रियन्ते सकृत्॥१२८॥

संस्तरचयनं तु—अर्धार्कपत्रं हण्डिकाया पक्वं दत्त्वा, तत्र कज्जली तदुपरि ताम्रपत्र पुनस्तदुपरि कज्जली तदुपरि पक्वार्कपत्रं, एवं क्रमेणेति भावः । हण्डिकाया पक्वं दत्त्वेत्ययमर्थः— आदौ रन्ध्रवति भाण्डे अम्लिकात्वग्भस्म चतुरङ्गुलं दृढं प्रसार्य, तत्र ताम्रसस्तर दत्त्वा, तदुपरि पुनर्भस्मचूर्णं कृत्वा, उपरि शरावमृत्कर्पटानि दत्त्वा, चुल्ल्यामारोप्य प्रहरचतुष्टयपर्यन्तमग्निं तीव्रतरं दत्त्वा तानि म्रियन्ते, स्वाङ्गशीतानि ग्राह्याणि । शुचिरत्र वह्निः । अथान्यः प्रकारः—

शुल्बपत्राणि सूतेन चतुर्थांशेन लेपयेत् ।
अम्लपिष्टं द्विगुणितमूर्ध्वाधो दापयेद्बलिम् ॥ १२९ ॥
चाङ्गेरीकल्कगर्भस्थ भाण्डे याम पचेद्दृढम् ।
भस्मीभूत ताम्रपत्रं सर्व[1]योगेषु योजयेत् ॥ १३० ॥

अन्यच्च—

जम्बीररससंपिष्टरसगन्धकलेपितम् ।
ताम्रपत्रं शरावस्थं त्रिपुटैर्याति भस्मताम् ॥ १३१ ॥

---

१ 'सर्वरोगेषु' ग ।

अन्यच्च—

गन्धाश्मना वा शिलया रविदुग्धेन लेपितम्।
जम्भाम्भसा च पुटनैस्ताम्रं भस्मत्वमाप्नुयात् ॥ १३२ ॥

इति रसरहित ताम्रभस्म मध्यमपक्षीयम्। अथ सोमनाथी ताम्रभस्म—

शुल्बतुल्येन सूतेन बलिना तत्समेन च।
तदर्धांशेन तालेन शिलया च तदर्धया ॥ १३३ ॥

तदर्ध पारदादर्ध ताल, तालार्धा मनःशिला ॥

विधाय कज्जली श्लक्ष्णां भिन्नकज्जलसंनिभाम्।
यत्राध्यायविनिर्दिष्टगर्भयन्त्रोदरान्तरे ॥ १३४ ॥
कज्जली ताम्रपत्राणि पर्यायेण विनिक्षिपेत्।
प्रपचेद्यामपर्यन्तं स्वाङ्गशीतं समुद्धरेत् ॥ १३५ ॥

अथ गुणाः—

तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं
संलीढं परिणामशूलमुदर शूल च पाण्डु ज्वरम्।
गुल्मप्लीहयकृत्क्षयाग्निसदनं मेहं च मूलामयं
दुष्टां च ग्रहणी हरेद्ध्रुवमिदं श्रीसोमनाथाभिधम्॥१३६

ताम्रभस्मलक्षणम्—

बर्हिकण्ठप्रभं ताम्रं मृतं भवति केवलम्।
पिष्टं चूर्णत्वमायाति सरसं चेत्सचन्द्रिकम् ॥ १३७ ॥

अथ ताम्रगुणाः—

ताम्रं कषायं मधुरं च तिक्तमम्ल च पाके कटु सारकं च।
पित्तापहं श्लेष्महरं च शीतं तद्रोपणं स्याल्लघु लेखनं च १३८
पाण्डूदरार्शोगरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम्।
शोफं कृमि शूलमपाकरोति प्राहुः परे बृंहणमल्पमेतत्॥१३९॥

दाहः खेदोऽरुचिमूर्च्छा क्लेदो रेको वमिर्भ्रमः ।
असम्यक्छोधिते दोषास्ताम्रेऽसम्यक्च मारिते ॥ १४० ॥

**अथ वङ्गस्य नामलक्षणशोधनमारणानि ।**

वङ्गं रङ्ग त्रपु प्रोक्तं तथा पिच्चटमित्यपि ।
खुरक मिश्रक चेति द्विविधं वङ्गमुच्यते ॥ १४१ ॥
खुरकं श्रेष्ठमुद्दिष्टं मिश्रकं चावरं स्मृतम् ।
खुरकं चन्द्ररूप्याभं खुराकार च कीर्त्यते ।
एतल्लक्षणभिन्नं तु वङ्गं मिश्रकनामकम् ॥ १४२ ॥

गुणाः—

रङ्गं लघु सरं रूक्षमुष्णं मेहकफक्रमीन् ।
निहन्ति पाण्डुकं[1] श्वासं चक्षुष्यं पित्तलं मनाक् ॥ १४३ ॥
सिहो यथा हस्तिगणं निहन्ति तथैव वङ्गोऽखिलमेहवर्गम् ।
देहस्य सौख्यं प्रबलेन्द्रियत्व नरस्य पुष्टि विदधाति नूनम्१४४

अन्यत्रापि—

वङ्गं तीक्ष्णोष्णरूक्षं कफक्रमिवमिजिन्मेहमेदोनिलघ्नं
कासश्वासक्षयघ्नं प्रशमितहुतभुग्मान्द्यमा मानदारि ।
बल्य वृष्य प्रभाकृन्मनसिजजनक सर्वमेहप्रणाशि
प्रज्ञाकृद्वर्ण्यमुच्चैरलघुरतिरसस्यास्पदं बृंहण च ॥ १४५॥

अन्यच्च—

बल्यं दीपनपाचनं रुचिकर प्रज्ञाकरं शीतलं
सौन्दर्यैकविवर्धन हितकरं नीरोगताकारकम् ।
धातुस्थौल्यकरं क्षयिक्षयहर सर्वप्रमेहापहं
वङ्गं भक्षयतो नरस्य न भवेत्स्वप्नेऽपि शुक्रक्षयः॥१४६॥
अशुद्धममृतं वङ्गं प्रमेहादिगणप्रदम् ।
गुल्महृद्रोगशूलार्शःकासश्वासवमिप्रदम् ॥ १४७ ॥

---

1 'पाण्डु कास च' ग ।

वङ्गभस्मकरणं–अस्य शोधनं विशेषशोधनं च प्रागुक्तम् ॥

शुद्धं वङ्गं क्षिपेद्भण्ड्या चुल्हिस्थाया शनैः शनैः।
तदधो ज्वालयेदग्निं द्रुते वङ्गे क्षिपेत्पुनः॥ १४८॥
अपामार्गं चतुर्थांशं चूर्णं संचालयेदिदम्।
स्थूलाग्रया लोहदर्व्या यावत्तद्भस्म जायते॥ १४९॥

अत्र रहस्यम्—

चूर्णप्रक्षेपणं कार्यं स्वल्पं स्वल्पं मुहुर्मुहुः।
यावद्भस्म भवेद्वङ्गं तावच्चूर्णं समापयेत्॥ १५०॥
ततः शरावपिहितं स्थापयेत्तत्र तद्भिषक्।
रजः सर्वं ततोऽधस्तात्कुर्यादग्निं तु तीव्रकम्॥ १५१॥
यावदङ्गारवर्णं तद्रजः समुपजायते।
स्वाङ्गशीतं ततो ग्राह्यं मारणाय रजः शुभम्॥ १५२॥

प्रकारान्तरं रसपद्धत्याम्—

वङ्गे घर्षणकाल एव भिषजः पीतायवानीरजो
न्यस्यन्ति क्षणशः शिलाजतु तथा भस्माप्यपामार्गजम्।
क्षिप्त्वा रङ्गदलान्यरुष्कपिशितैर्भाण्डे तु चिञ्चात्वचो
भूत्वा संस्तरसंस्थितानि पुटतः कुर्वन्ति भस्मान्यपि१५३

घर्षणकाले वक्ष्यमाणपलाशदण्डादिना घर्षणे, पीता हरिद्रा, यवानी यवासा, अनयो रजः; क्षणशः क्षणं क्षणं यावत् पिष्टीभवति तावद्भिषजो न्यस्यन्ति; ततो भस्मनः शुद्ध्यर्थं शिलाजतुं क्षिपन्ति, शिलाजतुरत्र श्वेतो ग्राह्यः सोरकाख्यः; तथेति अपामार्गज भस्म घर्षणकाले वा क्षिपन्ति। अत्र भस्मीकृत्य तदुपरि शरावं दत्त्वा तीव्रतरं वह्निं कृत्वा यथाऽङ्गारवर्णं भवति तथा कर्तव्यम्। पश्चात्स्वाङ्गशीतं ग्राह्यम्। मारणार्थं तद्भस्म भवति। प्रकारान्तरं–क्षिप्त्वेति। संस्तरस्तु भस्म दत्त्वा तदुपरि पत्रं, एवं क्रमेण। पुटं गजपुटम्॥

प्रकारान्तरं तत्रैव—

यद्वैतस्य दलानि विंशतिगुणे पिण्याकचूर्णेऽतसी-
संभूते शणपट्टवर्तिनि पुनस्तद्वद्यवान्या अपि ।
कीर्णानि क्रमशो निबध्य सुदृढं रुद्ध्वा गजाह्वे पुटे
स्युर्भस्म त्रपुणि स्थिते तु पुटतोऽपक्केऽयमेव क्रमः १५४

व्याख्या—अतसीपिण्याकचूर्णयवानीचूर्णयोः समुच्चयः, शणपट्टवर्तिनीति उभयोर्विशेषणं, क्रमशः पटे उभयोश्चूर्णं तत्रैकं पत्रं पुनश्चूर्णमित्यादि । अथैवमन्यतमप्रकारेण निष्पन्नस्य वङ्गभस्मनः पुनर्मारणेन निरुत्थीकरणमाह—

अथैवं वङ्गजं भस्म शुद्धतालेन मेलयेत् ।
समेन वाऽङ्घ्रिणांशेन ह्यष्टमांशेन वा ततः ॥ १५५ ॥
मर्दयेन्निम्बुकद्रावैरथवा कन्यकाद्रवैः ।
यामैकं वा द्वियामं वा दृढं मर्द्याथ चक्रिकाम् ॥ १५६ ॥
कृत्वा घर्मविशुष्का ता पिप्पलस्य त्वगन्तरे ।
संस्थाप्य पश्चादेवं तत्सप्तधा विपचेद्भिषक् ॥ १५७ ॥
सर्वोत्तमं वङ्गभस्म निरुत्थं खटिकाप्रभम् ।
सर्वकार्यकरं चैव जायते वैद्यजीवनम् ॥ १५८ ॥
द्वितीयादिपुटे तालं न देयं किन्तु घर्षणैः ।
प्रोक्तद्रव्येण चक्राभं कृत्वा शुष्कं पुटेन्मुहुः ॥ १५९ ॥

पिप्पलस्य त्वगन्तरे स्थापनविधिः—

पिप्पलत्वग्भवं चूर्णं मर्द्यं स्थाप्य शरावके ।
चक्रिका तत्र संस्थाप्य शेषमूर्ध्वं न्यसेद्रजः ॥ १६० ॥
सपिधायाथ संरुध्य मृत्कर्पटविलेपितम् ।
शुष्कं गजपुटे क्षेप्यं रहस्यमिति कीर्तितम् ॥ १६१ ॥
केचिद्वदन्ति पुटनाद्यदा भस्म मृदुर्भवेत् ।
तदाऽन्तिमपुटान्यस्य स्वल्पच्छगणकानि हि ॥ १६२ ॥

इति वङ्गरजसो निरुत्थीकरणेन भस्मत्वापादनम् । अथ प्रकारान्तरम्—

वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन तत्पुटेत् ।
शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मता व्रजेत् ॥ १६३ ॥

अथ मध्यमपक्षेण वङ्गमारणम्—

रजनीरजसा वह्नौ स्थाप्य हण्ड्या तु पूर्ववत् ।
वङ्गभस्म विधायाथ सोरक तत्र मेलयेत् ॥ १६४ ॥
वङ्गतुर्यांशकं तत्स्याच्छरावेण पिधापयेत् ।
मन्दमग्निं घटीमेका दत्त्वाऽथ स्वाङ्गशीतलम् ॥ १६५ ॥
कुन्देन्दुधवल भस्म वङ्गं ग्राह्य स्वकार्यकृत् ॥ १६६ ॥

अथान्यः प्रकारः—

वन्योपलोपरिस्थे तु गोणीखण्डे क्षिपेद्रजः ।
तिन्तिणीवल्कलस्याथ तिलास्तत्र विनिक्षिपेत् ॥ १६७ ॥
अङ्गुलार्धप्रमाणेन तत्र वङ्गदलं न्यसेत् ।
खण्डीकृतं पुनस्तेन क्रमेणैवाऽथ विन्यसेत् ॥ १६८ ॥
तिलतिन्तिणिवल्कं च, गोमयेनाग्निना दहेत् ।
स्वाङ्गशीत ततो ग्राह्य युक्त्या वङ्गस्य भस्म तत् ।
श्वेतं तु लवणाभास सुसूक्ष्म सर्वकार्यकृत् ॥ १६९ ॥
अत्र पक्षद्वये तालदानं प्राज्ञैरुपेक्षितम् । इत्यपि वङ्गभस्म ।

मतान्तरम्—

मृत्पात्रे द्राविते वङ्गे चिञ्चाश्वत्थत्वचो रजः ।
क्षिप्त्वा वङ्गचतुर्थांशमयोदर्व्या प्रचालयेत् ॥ १७० ॥
ततो द्वियाममात्रेण वङ्गभस्म प्रजायते ।
अथ भस्मसमं ताल क्षिप्त्वाऽम्लेन विमर्दयेत् ॥ १७१ ॥
ततो गजपुटे पक्त्वा पुनरम्लेन मर्दयेत् ।

तालेन दशमाशेन याममेकं ततः पुटेत् ।
एवं दशपुटैः पक्कं वङ्गं भवति मारितम् ॥ १७२ ॥

इति दशपुटि वङ्गभस्म ॥

**अथ यशदस्य नामलक्षणगुणमारणानि ।**
**'जस्ता' इति भाषा ॥**

जसदं रङ्गसदृश रीतिहेतुश्च तन्मतम् ।

उक्त च—

जशदं गिरिज तस्य दोषाः शोधनमारणे ।
वङ्गस्येव हि बोद्धव्या गुणास्तु प्रवदाम्यहम् ॥ १७३ ॥

गुणाः—

जसदं तुवरं तिक्तं शीतल कफपित्तहृत् ।
चक्षुष्यं परमं मेहान् पाण्डुं श्वासं च नाशयेत् ॥ १७४ ॥

**अथ नागस्योत्पत्तिनामलक्षणगुणशोधनमारणानि ।**

दृष्ट्वा भोगिसुता रम्या वासुकिस्तु मुमोच यत् ।
वीर्यं जातस्ततो नागः सर्वरोगापहो नृणाम् ॥ १७५ ॥
नागः सीसं च वध्रं च योगेष्टं नागनामकम् ।
नागनामकं भुजङ्गादिपर्यायवाचकमित्यर्थः ॥
सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ॥ १७६ ॥

अन्यच्च—

जागः समीरकफपित्तविकारहन्ता
सर्वप्रमेहवनराजिकृपीटयोनिः ।
उष्णः सरो रजतरञ्जनकृद्व्रणार्शो-
गुल्मग्रहण्यतिसृतिक्षणदाशुमाली ॥ १७७ ॥
नागस्तु नागशततुल्यबलं ददाति
व्याधिं विनाशयति जीवनमातनोति ।

वह्निं प्रदीपयति कामबलं करोति
मृत्युं च नाशयति संततसेवितः सः ॥ १७८ ॥

अशुद्धः कुरुते नागः प्रमेहक्षयकामलाः ।
तस्मात्संशुद्ध एवायं मारणीयो भिषग्वरैः ॥ १७९ ॥

अपक्वदोषाः—

पाकेन हीनौ किल नागवङ्गौ कुष्ठानि गुल्मांश्च तथाऽतिकष्टान् ।
पाण्डुप्रमेहानलसादशोथभगन्दरादीन् कुरुतः प्रभुक्तौ ॥१८०॥

अस्य शोधन विशेषशोधन च प्रागुक्तम् । अथ मारणम्—

अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् ।
मृत्पात्रे विद्रुते नागे लोहदर्व्या प्रचालयेत् ॥ १८१ ॥

यामैकेन भवेद्भस्म तत्तुल्या तु मनःशिला ।
काञ्जिकेन द्वयं पिष्ट्वा पुटेद्गजपुटेन च ॥ १८२ ॥

स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च ।
पुनः पचेच्छरावाभ्यामेव षष्टिपुटैर्मृतिः ॥ १८३ ॥

इति षष्टिपुटि नागभस्म ॥

ताम्बूलरससंपिष्टशिलालेपात्पुनः पुनः ।
द्वात्रिंशद्भिः पुटैर्नागो निरुत्थ भस्म जायते ॥ १८४ ॥

इति द्वात्रिंशत्पुटि नागभस्म । अथान्यमतम्—

भूभुजङ्गमगस्तिं च पिष्ट्वाऽहेः पत्रमादिहेत् ।
हण्ड्यामग्नौ द्रवीकृत्य वासापामार्गसंभवम् ॥ १८५ ॥

क्षारं विमिश्रयेत्तत्र चतुर्थांशं गुरूक्तितः ।
प्रहरं पाचयेच्चुल्ल्या वासादर्व्या विघट्टयन् ॥ १८६ ॥

चूर्णीभूतं पिधायाथ कुर्यादग्निं समं पुनः ।
तत उद्धृत्य तच्चूर्णं शुद्धया शिलयाऽन्वितम् ॥ १८७ ॥

वस्वंशयाऽथ तत्सर्वं वासानीरैर्विमर्दयेत् ।

पुटेत्पुनः समुद्धृत्य तद्द्रवेण विमर्दयेत् ।
एवं सप्तपुटैर्नागः सिन्दूराभो भवेद्ध्रुवम् ॥ १८८ ॥

भूभुजङ्गः भूनागः, अगस्तिर्मुनिद्रुमस्तत्पर्णरसम् । क्षारं सौकर्याद्भस्म ग्राह्यम् । गुरूक्तिः स्वल्प स्वल्पं प्रतिक्षण देयमित्येवंरूपा, प्रहरं यावद्भस्म भवत्यखिलं तावत्, न तु प्रहरनियमः ॥

इति निरुत्थं नागभस्म । रसपद्धत्याम्—

नागं काष्ठकृशानुना पटुघटभ्राष्ट्रे द्रुतं कन्यका-
मूलैर्घृष्टमिभाशनार्कबहुपाद्ब्रह्मद्रुमूलायसाम् ।
दण्डेनान्यतमस्य वा यदवधि स्यात्पिष्टिका तत्पुनः
सिन्दूरारुणमुद्धृतं च शिलया वस्वंशया योजितम् १८९
कन्यावारिविभावितं पुनरपि प्राक्प्रक्रियोत्पादितं
त्रिः स्याद्भस्म करीषवह्निपुटितं प्रान्तेऽतिमन्दं सकृत् ।
कन्यामूलविघट्टनारहितया वङ्गोऽपि भस्मीभवे-
त्पूर्वप्रक्रिययैव मानसशिलास्थाने तु दत्तालया॥१९०॥

व्याख्या—इभाशनः पिप्पलः, अर्कः प्रसिद्ध, बहुपान्न्यग्रोधः, ब्रह्मद्रुः पलाशः, आयसं लोहं, एतेषामन्यतमेन दण्डेन दर्व्या यदवधि पिष्टिका स्यात्तदवधि पटुघटभ्राष्ट्रे दृढघटार्धखण्डे, नागं काष्ठाग्निना द्रवीकृत्य, तत्र कन्यामूल शुष्कं कन्यारसं वा दत्त्वा, घृष्टं कुर्यादिति भावार्थः । पुटितं त्रिःसप्तवार कन्यावारिणा मर्दितं शरावसंपुटस्थ करीषाग्निषु गजपुटेषु त्रिःपुटितं प्रान्तेऽतिमन्दपुटितं भस्म स्यात् । अमुं प्रकारं वङ्गेऽप्यतिदिशति—कन्येत्यादि । स्पष्टम् । अथान्यः प्रकारः—

नागं खर्परके निधाय कुनटीचूर्णं ददीत द्रुते
निम्बूत्थद्रवगन्धकेन पुटितं भस्मीभवत्याशु तत् ।

एवं तालकवापतस्तु कुटिलं चूर्णीकृतं तत्पुटे-
द्रन्धाम्लेन समस्तदोषरहित योगेषु योज्यं भवेत् १९१

अथान्यः प्रकारः—

त्रिभिः कुम्भिपुटैर्नागो वासारसविमर्दितः ।
सशिलो भस्मतामेति तद्रजः सर्वमेहनुत् ॥ १९२ ॥

कुम्भी गजः। नागो नागपिष्टिः। सशिलोऽष्टमांशशुद्धशिलायुक्तः। 'शरावसंपुटस्थः' इत्य-याहार्यम् । इति नागभस्मीकरणम् । अथ नागभस्मनि विशेष उक्तो रसपद्धतिकृता । तद्यथा—

सर्वेषा मतमेतदेव भिषजा यत्तारसीसोद्भवं
पार्थक्येन गुणावहं न भसितं प्रोक्तोपलोहस्य च ।
किं कार्यं भसितस्य चेच्छृणु रसादिष्वेव योज्यं हि त-
त्तादृक्सद्वचनानुरोधबलतः प्रोक्ताव्यवस्था इति॥१९३॥

अथ नागेश्वरः।—

पलप्रमितं नाग तिलतैले सप्तवार विशोध्य, पश्चाद्विस्तीर्ण-हण्डिकाया द्रवीकृत्य वर्तुलपाषाणेन मर्दनपूर्वकं कासीसस्यो-त्तमस्य चूर्ण नागपरिमित स्वल्पं स्वल्पं दत्त्वा दत्त्वा मारयेत् । मृत नागं घटीद्वयं वह्नावेव स्थाप्यम्। पश्चाद्भाजने तच्चूर्ण दत्त्वा, उष्णोदकेन सप्तवार सुधौत घर्मसंशुष्क च विधाय, अर्कदुग्धेन प्रहरद्वयं मर्दयेत्। पश्चात्तच्चक्रिका कृत्वा, संशोष्य, शरावसंपुटे धृत्वा, पञ्चषट्कपरिमितैर्वनोपलैः पुटेत् । स्वाङ्गशीतं गृही-त्वाऽनयैव रीत्या रसेन प्रहरद्वयं मर्दयित्वा पुटेत्। पश्चात् पारदः पलमितः, गन्धक आमलसाराख्यः पलप्रमितः, द्वयोः कज्जलि कृत्वा, पूर्वसिद्धमृतनागे विमिश्र्य मर्दयित्वा, सहदेव्या रसेन मर्दयेत्प्रहरद्वयं, ततश्चक्रिका कृत्वा विशोष्य शरावसंपुटे धृत्वा पूर्ण गजपुटं दद्यात् । ततः स्वाङ्गशीतं गृहीत्वा, कुमा-

रीरसेन मर्दयेत्, तदुपरि अर्कदुग्धेन मर्दयेत् प्रहरैकं, पश्चात्त-चक्रिका कृत्वा संशोष्य शरावसपुटे धृत्वा पञ्चषट्कपरिमितै-र्वनोपलैः पुटेत्, तदुत्तरं तस्य सहदेव्या रसेन पुटैकं दद्यात्, ततः सिद्धो जात. । अथ प्रयोगः—रक्तिकाद्वयमस्य बाकुची-चूर्णेन सह देयं दिनानि चत्वारिंशत्, पथ्यं गोधूमतिलतैल, औषध भक्षयित्वा घर्मे प्रहरैक स्थेय, ततोऽल्पदिनैर्मण्डलपा-काञ्जलस्रावोत्तर क्रमेण सवर्णता । देवदारुदारुचिनीबाकुची-युक्तं गलत्कुष्ठे, त्रिकटुदेवदारुयुक्तं वातरक्ते, मूत्रकृच्छ्रे बाकुचीयुक्तं, दुग्धोदनं सर्वत्र पथ्यम् । इति नागेश्वरो रसः ॥

## अथ लोहस्योत्पत्तिनामलक्षणभेदगुणशोधन-मारणानि ।

पुरा लोमिलदैत्यस्य निहतस्य सुरैर्युधि ।
उत्पन्नानि शरीरेभ्यो लोहानि विविधानि वै ॥ १९४ ॥

अथ नामानि—

लोहोऽस्त्री शस्त्रकं तीक्ष्ण पिण्डं कालायसायसी ।
मुण्ड तीक्ष्णं तथा कान्तमिति लोह त्रिधा स्मृतम् ॥ १९५ ॥

मुण्ड तु त्रिविध तत्र मृदु कुण्ठं कडारकम् ।
तीक्ष्णक षड्विध प्राहुः खराख्य सारसंज्ञकम् ॥ १९६ ॥
हुन्तालमपर तारावट्टं बाजिरकालकम् ।
कान्त पञ्चविधं ज्ञेय भ्रामकं चुम्बकं तथा ॥ १९७ ॥
कर्षक द्रावक तद्वद्रोमकान्तं च पञ्चमम् ।
एकास्य द्विमुखं त्र्यास्यं वेदास्यं शरवक्त्रकम् ।
सर्वतोमुखमित्येवमुत्तमाधमकान्तकम् ॥ १९८ ॥

लक्षणम्—

भेदाना लक्षणान्यत्र न संप्रोक्तानि गौरवात् ।
आख्यया प्रस्फुटानि स्युर्मुख्याना लक्ष्म कथ्यते ॥१९९॥

मुण्डं तु वर्तुलं भूमौ पर्वतेषु च जायते ।
गजवल्ल्यादि तीक्ष्णं स्यात् कान्तं चुम्बकसंभवम् ॥२००॥

अन्यच्च—

मुण्डात्कटाहपात्रादि जायते, तीक्ष्णलोहतः ।
खड्गादिशस्त्रभेदाः स्युः, कान्तलोहं तु दुर्लभम् ॥ २०१ ॥
मुण्डाच्छतगुण तीक्ष्णं तीक्ष्णात्कान्तं शताधिकम् ।
तस्मान्मुण्डं परित्यज्य तीक्ष्णं वा कान्तमुत्तमम् ॥ २०२ ॥

'मारणाय' इति शेषः । अथ तीक्ष्णकान्तयोर्विशेषलक्षणानि—

कासीसामलकल्काक्ते लोहेऽङ्गं दृश्यते स्फुटम् ।
तीक्ष्णलोह तदुद्दिष्टं मारणायोत्तमं विदुः ॥ २०३ ॥

अन्यच्च—

क्ष्माभृच्छिखराकाराण्यङ्गान्यम्लेन मर्दिते[1] ।
लोहे स्युर्यत्र सूक्ष्माणि तत्सारमभिधीयते ॥ २०४ ॥

अस्य गुणाः—

लोह साराह्वयं हन्याद्ग्रहणीमतिसारकम् ।
अर्धसर्वाङ्गजं वातं शूलं च परिणामजम् ॥
छर्दिं च पीनसं पित्तं श्वासमाशु व्यपोहति ॥ २०५ ॥

अथ कान्तलक्षणगुणाः—

यत्पात्रे न प्रसरति जले तैलबिन्दुः प्रतप्ते
हिङ्गुर्गन्धं त्यजति च निज तिक्तता निम्बकल्कः ।
तप्तं दुग्धं भवति शिखराकारक नैति भूमिं
कृष्णाङ्गः स्यात्सजलचणकः कान्तलोहं तदुक्तम् ॥२०६
कान्तायः कामलाशोफकुष्ठानि क्षयगुल्मकौ ।
शूलोदरार्शःप्लीहानमामवातं भगन्दरम् ॥ २०७ ॥
अम्लपित्तं यकृच्चापि शिरोरोगं हरेद्ध्रुवम् ।

---

१ 'लेपिते' ग ।

बल वीर्य वपुःपुष्टि कुरुतेऽग्नि विवर्धयेत् ।
सर्वान् गदान् विजयते कान्तलोहं न संशयः ॥ २०८ ॥

अथ सामान्यगुणाः—

लोहं शीतं सरं तिक्त मधुरं तुवरं गुरु ।
रूक्षं वयस्यं चक्षुष्यं लेखन वातल, जयेत् ॥ २०९ ॥
कफं पित्तं गरं शूलं शोफार्शःप्लीहपाण्डुताः ।
मेदोमेहकृमीकुष्ठं तत्किट्टं तद्गुणं स्मृतम् ॥ २१० ॥

अथलोहदोषाः—

गुरुता दृढतोत्क्लेदः कश्मलं दाहकारिता ।
अश्मदोषः सदुर्गन्धो दोषाः सप्तायसः स्मृताः ॥ २११ ॥

अथाशुद्धगुणाः—

षण्ढत्वकुष्ठामयमृत्युदं भवेद्धृद्रोगशूलौ कुरुतेऽश्मरीं च ।
नानारुजाना च तथा प्रकोप करोति हृल्लासमशुद्धलोहम् २१२

अथासम्यङ्मारितस्य गुणाः—

जीवहारि मदकारि चायसं देहशूलकृदसंस्कृतं ध्रुवम् ।
पाटव न तनुते शरीरके दारुणा हृदि रुजा च यच्छति २१३

अथ केचित्—

न रसेन विना लोह न लोह चाभ्रक विना ।
एकत्वेन शरीरस्य बन्धो भवति देहिनः ॥ २१४ ॥
पारदेन विना लोहं यः करोति पुमानिह ।
उदरे तस्य किट्टानि जायन्ते नात्र संशयः ॥ २१५ ॥

वस्तुतस्तु प्राशस्त्याय रसयोगो रसाभ्रयोगश्च । अथानुपान-मेतस्य—

त्रिफलामधुसंयुक्त सर्वरोगेषु योजयेत् ।
पथ्याशिना लोहभस्म यथोक्तगुणदं भवेत् ॥ २१६ ॥

अस्य मात्राप्रमाण प्रागुक्तम् । अथ लोहसेविना वर्ज्यानि—

कूष्माण्डं तिलतैलं च माषान्नं राजिका तथा ।
मद्यमम्लं मसूराश्च त्यजेल्लोहस्य सेवकः ॥ २१७ ॥

अथ लोहोपद्रवे-

मुनिरसपिष्टविडङ्गं मुनिरसलीढ चिरं स्थितं घर्मे ।
द्रावयति लोहदोषान् वह्निर्नवनीतपिण्डमिव ॥ २१८ ॥
काले मलप्रवृत्तिर्लाघवमुदरे विशुद्धिरुद्गारे ।
अङ्गेषु नावसादो मनःप्रसादोऽस्य परिपाके ॥ २१९ ॥

अस्य लोहस्य ॥

कृमिरिपुसहित लीढं सहित स्वरसेन वङ्गसेनस्य ।
क्षपयत्यचिरान्नियत लोहाजीर्णोद्भव शूलम् ॥ २२० ॥
आरग्वधस्य मज्जाभी रेचन किट्टशान्तये ।
भवेद्यद्यतिसारश्च पीत्वा दुग्धं तु त जयेत् ॥ २२१ ॥

अथ लोहमारणम्—

जीर्णशस्त्रादिखण्डा वा पुराणा यन्त्रखण्डकाः ।
तीक्ष्णजास्ते हि गृह्णन्ति मारणार्थ भिषग्वराः ॥ २२२ ॥

यन्त्रखण्डकाः यन्त्रीलोहमिति प्रसिद्धा लोके । येषा छिद्रेषु स्वर्णसूत्रं क्षिप्त्वा संदंशेनाकृष्य वर्धयन्ति स्वर्णकारास्तानि यन्त्रलोहानीति प्रसिद्धिः । शस्त्रादिखण्डाः खड्गकट्टारिकाच्छुरिकादिजाः । अन्येऽपि तादृशसंबन्धिनो ग्राह्याः ॥

तेषा कण्टकवेधीनि यथाशक्ति दलानि वै ।
निर्मलानि विधायादौ शोधयेत्प्रोक्तवर्त्मना ॥ २२३ ॥
पश्चाच्छुद्धदलान्येषां लोहकारैस्तु रेतयेत् ।
शुल्क दत्त्वा कुट्टयेद्वा तच्चूर्णमथ मारयेत् ॥ २२४ ॥

अथ सुगमपक्षः—

शाणोद्वान्तं सारचूर्ण गृहीतं चुम्बकाश्मना ।

शस्त्रकृल्लोहकाराणा गृहे तद्बहुल भवेत् ॥ २२५ ॥
तच्चूर्ण तु समानीय सुधौतं निर्मल शुचि ।
युक्त्या सशोध्य विधिना मारण तस्य कारयेत् ॥ २२६ ॥

युक्तिस्तु दृढशरावे वा लोहजशरावे वा तच्चूर्ण सस्थाप्य, कोकिलैः शुल्कानीतैर्ध्मात्वा लोहकारादिभिर्ध्मापयित्वा वा भस्त्रावातेन, अग्निसमानं दृष्ट्वा, संदंशेन निष्कास्य, तन्मध्ये तैलतक्रादि देय, एवं सुकर भवति। तैलतक्रादिषु चूर्ण निक्षिप्त चेत्पुनः पुनस्तस्मान्निष्कासने महत्प्रयास इति। एवं यथाबुद्धिवैभवं शोधयेत्। पुनरन्योऽपि चूर्णप्रकारः—

सशुद्धं लोहजं पत्र तप्तं तप्तं वराजले ।
गोजले वा मुहुः क्षिप्त क्षिप्रं चूर्णत्वमाप्नुयात् ॥ २२७ ॥

पुनरन्योऽपि चूर्णप्रकारः—

स्थूलाभ्यः सिकताभ्योऽपि चुम्बकेन शनैर्मुहुः ।
लोहचूर्ण हि गृह्णन्ति सुसूक्ष्मं[1] मारणे हितम् ॥ २२८ ॥

अथ विशेषशोधनम्—

तैलतक्रादिसंशुद्ध लोहं शोध्य विशेषतः ।
प्रोक्तदोषविनाशाय तदिदानीमिहोच्यते ॥ २२९ ॥
त्रिफलाष्टगुणे तोये त्रिफलाषोडशं पलम् ।
तत्क्वाथे पादशेषे तु लोहस्य पलपञ्चकम् ॥ २३० ॥
कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् ।
एव प्रलीयते दोषो गिरिजो लोहसभवः ॥ २३१ ॥

अथात्र कान्तलोहे विशेषः—

शशरक्तेन संलिप्तं किंवाऽऽर्कपयसाऽऽयसम् ।
दलं हुताशने ध्मातं सिक्तं त्रैफलवारिणि ॥
त्रिश कान्तस्य संशुद्धिरित्येवं परमा भवेत् ॥ २३२ ॥

---

१ 'तत्सूक्ष्म' ग ।

अन्यत्रापि—

तप्त क्षाराम्लसयुक्त शशरक्तेन भावितम् ।
कान्तलोह भवेच्छुद्ध सर्वदोषविवर्जितम् ॥ २३३ ॥

अत्रान्योऽपि विशेषः—

तत्तब्याव्युपयुक्तानामौषधानां जलेऽयसः ।
प्रक्षेपं प्राह तत्त्वज्ञः सिद्धो नागार्जुनस्ततः ॥ २३४ ॥

ततः सामान्यविशेषशोधनत. । अन्यच्च—

सर्वाभावे निषेक्तव्य क्षीरतैलाज्यगोजले ।
शुद्धस्य शोधनं ह्येतद्गुणाधिक्याय संमतम् ॥ २३५ ॥

इति विशेषशोधनम् । अथ भस्मप्रकारः—

संशुद्ध लोहचूर्ण तु समानीय भिषग्वरः ।
अपक्वतिन्दुकफलरसैः समर्दयेद्दिनम् ॥ २३६ ॥
त्रिफलाभृङ्गराजस्य कण्टकारीरसस्य च ।
पुटानि त्रीणि दत्तानि सत्यं वारितरं भवेत् ॥ २३७ ॥
तत्तद्रोगानुपानेन सर्वरोगहर भवेत् ।
लाला अनूपरायेण उपदिष्टं न संशयः ॥ २३८ ॥
शुद्धस्य सूतराजस्य भागो भागद्वयं बलेः ।
द्वयोः सम सारचूर्ण मर्दयेत्कन्यकाम्बुना ॥ २३९ ॥
यामद्वयं तस्य गोल संवेष्ट्यैरण्डजैर्दलैः ।
ततः सूत्रेण संबध्य स्थापयेत्ताम्रसंपुटे ॥ २४० ॥
संमुद्र्य वदन तस्य मृदा संशोष्य तत्पुनः ।
त्रिदिनं धान्यराशिस्थ तत उद्धृत्य मर्दयेत् ॥ २४१ ॥
रजस्तद्वस्त्रगलितं नीरे तरति हंसवत् ।
सोमामृताभिदमिदं लोहभस्म प्रकीर्तितम् ॥ २४२ ॥

इति निरग्निकं सोमामृताभिदं लोहभस्म । अथ रसपद्धत्या सूर्यतापि लोहभस्म उक्तम्—

शाणोद्वान्तमयस्तु कान्तमथवा क्षिप्त्वाऽर्धलेलीतकं
दत्त्वाऽङ्घ्र्यंशरसं विमर्द्य सलिलैर्भृङ्गाद्रिकर्णीरसैः ।
पक्वं सूर्यपुटैश्चतुर्दशदिनैरेरण्डपत्रावृतं
भस्म स्याद्गृहधूमधूसररुचि प्राग्धान्यराशिस्थितम् २४३

व्याख्या—संशुद्ध लोहं शाणोद्वान्तं शाण शस्त्रोत्तेजकं शस्त्र तत्र घर्षणेन उद्वान्तं पतितमयः सारलोहं, अथवा तेनैव प्रकरेण पतित कान्तलोह, तत्रार्धलेलीतकं गन्धकं क्षिप्त्वा, तत्र चतुर्थांश शुद्धपारद च दत्त्वा, सर्व विमर्द्य पूर्व शुष्कमेव मर्दयित्वा, पश्चात्सलिलैः काञ्जिकादिभिः, पश्चाद्भृङ्गस्वरसेन तथा अद्रिकर्णी गिरिकर्णी तस्याः स्वरसैर्विमर्द्य, सूर्यपुटैः पक्वं चतुर्दशदिनैर्भावनाभिः, पश्चादेरण्डपत्रावृत गोलकं कृत्वा धान्यराशिस्थ त्रिदिन, गृहधूमधूसररुचि अलिन्दधूमतुल्यं भस्म स्यात्। अत्र सूर्यपुटानि प्रातःकालादारभ्य सन्ध्यापर्यन्त शुष्कमर्दनेन संपादनीयानि, भावना तु सन्ध्याया यथाऽऽर्द्रभावं संपद्यते तथा कार्या। अत्र भावनानियमो नास्ति, मर्दनस्यैव भस्मसंपादनत्वात्। इति सूर्यतापि लोहभस्म। मतान्तरम्—

सत्यानुभूतो योगीन्द्रैः क्रमोऽन्यो लोहमारणे ।
कथ्यते रामराजेन कौतूहलधियाऽधुना ॥ २४४ ॥

यथा—

सूतकाद्द्विगुणं गन्धं दत्त्वा कुर्याच्च कज्जलीम् ।
द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ॥ २४५ ॥
यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके ।
घर्मे धृत्वा रुबूकस्य पत्रैराच्छादयेद्बुधः ॥ २४६ ॥
यामद्वयाद्भवेदुष्णं धान्यराशौ न्यसेत्ततः ।

---

१ 'कौतूहलविधायिना' ग ।

दत्त्वोपरि शरावं तु त्रिदिनान्ते समुद्धरेत् ॥ २४७ ॥

पिष्ट्वा च गालयेद्वस्त्रादेव वारितरं भवेत् ।
एव सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत् ॥ २४८ ॥

इत्यपि सूर्यतापि लोहभस्म स्वर्णादिभस्म च। अथाग्निपक्वं लोहभस्म तत्रैव—

शाणाकृष्टमयोरजस्त्रिदिवसं पिष्टं वरावारिणा
यद्वा रक्तपुनर्नवादलरसैर्यद्वाऽद्रिकर्णीरसैः ।
चाङ्गेरीसलिलैस्तथैव सलिलैर्वा नीरवानीरजै-
स्त्रिंशद्दन्तिपुटैः परैर्जलतर स्याद्भस्म जम्बूप्रभम् ॥२४९॥

व्याख्या—शाणाकृष्ट शाणोपरि आकृष्टं यच्छुद्ध लोहं तीक्ष्णं कान्तं वा, तस्य रजः चुम्बकपाषाणादिना निःसारितः वरा त्रिफला, अद्रिकर्णी गिरिकर्णी, चाङ्गेरी अम्लपर्णी, नीरवानीरो जलवेतसः, एषामन्यतमस्य रसैस्त्रिदिवसं पिष्टं त्रिवारं भावित, पश्चाद्दन्तिपुटैः पक्व भस्म स्यात्रिंशत्संख्याकग-जपुटैरित्यर्थः । परैरतोऽप्यधिकैर्गजपुटैरुत्कृष्टतरं जलतर भस्म स्यादित्यर्थः । अत्र वाशब्दः समुच्चये । तेन एतैरौषधैर्यथा त्रिंशत्पुटानि भवन्ति तथा कार्यम् । त्रिदिवसशब्दस्तु भाव-नात्रयवाचकः, न त्वेकैकदिनसाध्यभावनावाचकः । इत्यग्नि-पक्वं त्रिंशत्पुटि शतपुटि वा लोहभस्म । अन्यच्च—

क्षिपेद्द्वादशमाशेन दरदं तीक्ष्णचूर्णतः ।
मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥
एवं सप्तपुटैर्मृत्यु लोहचूर्णमवाप्नुयात् ॥ २५० ॥

इति सप्तपुटि लोहभस्म । मतान्तरम्—

काकोदुम्बरिकानीरैर्लोहपत्राणि सेचयेत् ।
वह्नितप्तानि षड्वारं कुट्टयेत्तदुलूखले ॥ २५१ ॥

तत्पञ्चमांशं दरदं क्षिप्त्वा सर्वं विमर्दयेत् ।
कुमारीनीरतः श्लक्ष्ण पुटेद्गजपुटेन तु ॥ २५२ ॥
त्रिवार त्रिफलाक्वाथैस्तत्संख्यैरपि तत्त्ववित् ।
निरुत्थं जायते लोहं त्रिधाऽप्यत्र न सशयः ॥ २५३ ॥

इत्यग्निपक्व षट्पुटि लोहभस्म । मतान्तरम्—

निम्बूफलस्य पानीयैः सकासीसैः प्रपूरिते ।
कास्यपात्रे क्षिपेत्खड्गखण्डाश्चण्डातपस्थितान् ॥ २५४ ॥
दिनैकेन स्फुन्त्येते दिनान्ते तास्तु पेषयेत् ।
त्रिफलाक्वाथपिष्टं तच्चूर्ण गजपुटे पचेत् ॥ २५५ ॥
पौनःपुन्येन यावत्स्यात्तद्वारितरमुत्तमम् ।
ततः पारदगन्धाभ्या तत्समाभ्या हि मर्दितम् ॥
पूर्ववद्धान्यराशिस्थं तीक्ष्णं सर्वोत्तम भवेत् ॥ २५६ ॥

इति लोहभस्म । मतान्तरम्—

लोहं पत्रमतीव तप्तमसकृ(१००)त्क्वाथे क्षिपेत्त्रैफले
चूर्णीभूतमिद पुनस्त्रिफलजे क्वाथे पचेद्गोजले ।
मत्स्याक्षीत्रिफलारसेन पुटयेद्यावन्निरुत्थ भवे-
त्पश्चादाज्यमधुप्लुतं सुपुटित सिद्धं भवेदायसम् ॥२५७॥

मत्स्याक्षी शालञ्ची । इति लोहभस्म । मतान्तरम्—

परिप्लुत दाडिमपत्रवारा लौहं रजः स्वल्पकटोरिकायाम् ।
म्रियेत वस्त्रावृतमर्कभासा योग्य पुटैः स्यात्त्रिफलादिकानाम् ॥

इति लोहभस्म । मतान्तरम्—

लोहचूर्ण पल खल्वे सोरकस्य पल तथा ।
अच्छगन्धपलं चापि सर्वमेकत्र मर्दयेत् ॥ २५९ ॥
कुमार्यद्भिर्दिनं कुर्याद्गोलकं रुबुपत्रकैः ।
संवेष्ट्य च मृदा लिप्त्वा पुटेद्गजपुटे भिषक् ॥ २६० ॥

स्वाङ्गशीतं समुद्धृत्य सिन्दूराभमयोरजः।
मृतं वारितरं ग्राह्य सर्वकार्यकरं परम् ॥ २६१ ॥

इत्येकपुटि लोहभस्म।

सर्वमेव मृतं लोह ध्मातव्यं मित्रपञ्चकैः।
यद्येवं स्यान्निरुत्थं तु सेव्यं वारितरं हि तत् ॥ २६२ ॥
मधुघृतगुग्गुलुगुञ्जाटङ्कणमेतत्तु मित्रपञ्चकं नाम।
मेलयति सप्तधातूनङ्गाराग्नौ प्रधमनेन ॥ २६३ ॥
मध्वाज्यं मृतलोह च सरूप्यं संपुटे क्षिपेत्।
रुद्ध्वा ध्माते च संग्राह्यं रूप्यं वै पूर्वमानकम् ॥
तदा लोहं मृतं विद्यादन्यथा मारयेत्पुनः ॥ २६४ ॥

इति मृतामृतलोहपरीक्षा।

गन्धकेनोत्थितं लोहं तुल्य खल्वे विमर्दयेत्।
दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत् ॥
इत्येवं सर्वलोहाना कर्तव्येयं निरुत्थितिः ॥ २६५ ॥

इत्यपक्वस्य निरुत्थीकरणम्। अथ मृतलोहस्यामृतीकरणम्—

द्विगुणे त्रिफलाक्वाथे तुल्ये पिष्ट्वाऽप्ययोरजः।
विपचेन्मध्यपाकेन सर्वव्याधिजरापहम् ॥ २६६ ॥

इत्यमृतीकरणम्।

जम्बीररससंयुक्ते दरदे तप्तमायसम्।
बहुवारं विनिक्षिप्तं म्रियते नात्र संशयः ॥ २६७ ॥

अथ लोहद्रुतिः—

देवदाल्या रसैर्भाव्यं गन्धकं दिनसप्तकम्।
तस्य प्रवापमात्रेण लोहास्तिष्ठन्ति सूतवत् ॥ २६८ ॥
सुरदालिभव भस्म नरमूत्रेण गालितम्।
त्रिसप्तवारं तत्क्षारावापात्कान्तद्रुतिर्भवेत् ॥ २६९ ॥

इति कान्तद्रुतिः।

**अथ मण्डूरोत्पत्तिनामलक्षणगुणशोधनमारणानि ।**

ध्मायमानमयो वह्नौ परित्यजति यन्मलम् ।
तत् किट्टसंज्ञा लभते तदनेकविधं मतम् ॥ २७० ॥

उक्त च—

ध्मायमानस्य लोहस्य मल मण्डूरमुच्यते ।
लोहसिहानिका किट्टी सिहान च निगद्यते ॥
यस्य लोहस्य यत्प्रोक्तं तत्किट्टमपि तद्गुणम् ॥ २७१ ॥

लक्षणानि—

ईषच्छोण गुरु स्निग्धं मुण्डकिट्टं जगुर्बुधाः ।
भिन्नाञ्जनप्रभं किट्ट विशेषाद्गुरु निर्व्रणम् ॥ २७२ ॥
निःकोटर च विज्ञेयं तीक्ष्णकिट्टं मनीषिभिः ।
पिङ्गं रूक्षं गुरुतम मन्ददीर्घमकोटरम् ॥
छिन्न तु रजतच्छाय स्यात्तत्किट्टं तु कान्तजम् ॥ २७३ ॥

अन्यच्च—

अकोटर गुरु स्निग्ध दृढं शतसमाधिकम् ।
चिरोज्झितजनस्थानसंस्थित किट्टमाहरेत् ॥ २७४ ॥
शतोत्थमुत्तमं किट्टं मध्यं चाशीतिवार्षिकम् ।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥ २७५ ॥

अथ किट्टमारणम्—

अक्षाङ्गारैर्धमेत्किट्टमक्षपात्रस्थगोजले ।
निर्वापयेदष्टवारं ततः सूक्ष्मं विचूर्णयेत् ॥
तच्चूर्ण मधुना लीढं पाण्डुं हन्ति सकामलम् ॥ २७६ ॥

अथ किट्टगुणाः—

किट्ट कषायं शिशिरं पाण्डुश्वयथुशोफजित् ।
हलीमकं कामलां च हरते कुम्भकामलाम् ॥ २७७ ॥

किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शताधिकम्।
तीक्ष्णाल्लक्षगुण कान्त भक्षणात्कुरुते बलम् ॥ २७८ ॥
सुवर्णमथवा रौप्यं मृतं यत्र न विद्यते।
कान्तलोहेन कर्माणि तत्र कुर्याद्भिषग्वरः ॥ २७९ ॥
स्वर्णाभावे मतं ताप्य ततोऽपि स्वर्णगैरिकम्।
रूप्यादीनामलाभे तु प्रक्षिपेद्विमलादिकम् ॥ २८० ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे एकादशोऽध्याय ॥११॥

---

## अथ द्वादशोऽध्यायः।

### अथोपधातुनिरूपणम्।

**अथ तेषु स्वर्णमाक्षिकम्—'सोनामखी' इति लोके।**

स्वर्णमाक्षिकमाख्यातं तापीजं मधुमाक्षिकम्।
ताप्यं माक्षिकधातुश्च माक्षिक चैव तन्मतम् ॥ १ ॥
किंचित्सुवर्णसाहित्यात्स्वर्णमाक्षिकमीरितम्।
उपधातुः सुवर्णस्य किंचित्स्वर्णगुणैः समम् ॥ २ ॥
न केवल स्वर्णगुणा वर्तन्ते स्वर्णमाक्षिके।
द्रव्यान्तरस्य ससर्गात्सन्त्यन्येऽपि गुणा यतः ॥ ३ ॥
किन्तु तस्यानुकल्पत्वात् किञ्चिदूना गुणास्ततः।
तथाऽपि काञ्चनाभावे दीयते स्वर्णमाक्षिकम् ॥ ४ ॥
कान्यकुब्जाख्यविषये जायते स्वर्णमाक्षिकम्।
तपतीतीरतोऽपि स्यादित्येवं तद्द्वियोनिकम् ॥ ५ ॥
कान्यकुब्जोद्भवं ताप्यं विज्ञेयं स्वर्णवर्णकम्।
तपतीतीरगं तत्तु पञ्चवर्णमुदाहृतम् ॥ ६ ॥

लक्षणम्—

स्वर्णाभं स्वर्णमाक्षीकं निष्कोणं गुरुतायुतम्।
कालिमा विकिरेत्तत्तु करे घृष्टं न संशयः ॥ ७ ॥

अथ मारणयोग्यस्य लक्षणम्—

स्वर्णवर्णं गुरु स्निग्धमीषन्नीलच्छवि स्फुटम् ।
कषे कनकवद्धृष्टं तद्वर हेममाक्षिकम् ॥ ८ ॥

गुणाः—

सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् ।
चक्षुष्य बस्तिहृत्कण्ठपाण्डुमेहविषोदरम् ॥ ९ ॥
अर्शः शोफं विषं कण्डूं त्रिदोषमपि नाशयेत् ।
अनुपान वराव्योष वेल्ल साज्यं हि माक्षिके ॥ १० ॥

अथाशुद्धस्यासम्यङ्मारितस्य गुणाः—

मन्दानलत्व बलहानिमुग्रा विष्टम्भिता नेत्रगदान् सकुष्ठान् ।
माला विधत्तेऽपि च गण्डपूर्वा शुद्ध्यादिहीन खलु माक्षिकं तु ॥

अथोपधातूना भिन्नानि शोधनानि धातुशोधनेभ्यो विलक्षणानि सन्ति । तत्र स्वर्णमाक्षिकशोधनम्—

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्वाऽथ जम्बीरस्य द्रवैः पचेत् ॥ १२ ॥
चालयेल्लोहजे पात्रे यावत्पात्रं सुलोहितम् ।
भवेत्ततस्तु संशुद्धं स्वर्णमाक्षिकमत्र तु ॥ १३ ॥

माक्षिकस्य माक्षिकचूर्णस्य । अथ मारणम्—

माक्षिकस्य चतुर्थांशं दत्त्वा गन्धं विमर्दयेत् ।
उरुबूकस्य तैलेन ततः कार्याऽस्य चक्रिका ॥ १४ ॥
शरावसपुटे धृत्वा पुटेद्गजपुटेन च ।
धान्यस्य तुषमूर्ध्वाधो दत्त्वा शीतं समुद्धरेत् ।
सिन्दूराभ भवेद्भस्म माक्षिकस्य न संशयः ॥ १५ ॥

इति स्वर्णमाक्षिकमारणम् । मतान्तरम्—

कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् ।
अजामूत्रेण वा नून म्रियते स्वर्णमाक्षिकम् ॥ १६ ॥

इति स्वर्णमाक्षिकमारणम्। अथ सत्त्वाकृष्टिः—

एरण्डोत्थेन तैलेन गुञ्जा क्षौद्रं च टङ्कणम्।
मर्दित तस्य वापेन सत्त्वं माक्षिकज भवेत्॥ १७॥

इति माक्षिकसत्त्वम्। अथ तारमाक्षिकम्—

तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम्।
किंचिद्रजतसाहित्यात्तारमाक्षिकमीरितम्॥ १८॥
अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः।
न केवलं रौप्यगुणा वर्तन्ते तारमाक्षिके॥ १९॥
द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः॥ २०॥

अथैतत्स्वरूपलक्षणम्—

कास्यवच्चाकचिक्याढ्य कषे घृष्टे तु रूप्यवत्।
गुरु स्निग्ध सितं यत्तच्छ्रेष्ठं स्यात्तारमाक्षिकम्॥ २१॥
स्वर्णमाक्षिकवद्दोषा विज्ञेयास्तारमाक्षिके।
अतस्तद्दोषशान्त्यर्थं शोधनं तस्य कथ्यते॥ २२॥

यथा—

कर्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम्।
भावयेदातपे तीव्रे विमला शुध्यति ध्रुवम्॥ २३॥

विमला तारमाक्षिकम्। कर्कोटी खखसा, मेषशृङ्गी मेढासिंगी।

तन्मारणम्—

स्वर्णमाक्षिकवज्ज्ञेयं तारमाक्षिकमारणम्।
विमलाया गुणाः किंचिन्न्यूनाः कनकमाक्षिकात्॥ २४॥

इति तारमाक्षिकशोधनमारणम्॥

## अथ विमला।

माक्षिकस्यैव भेदान्तरं, प्रायशस्तत्रैव तपतीतीरसंनिधावुत्पद्यते। तत्स्वरूपलक्षणशोधनमारणानि रसपद्धत्यां यथा—

तापीजं द्विरुदाहरन्ति विमलामाक्षीकभेदादिह
　त्रेधाऽऽद्या तु सुवर्णकांस्यरजतच्छायानुकारादमूः ।
तिस्रोऽप्यस्रयुताश्चतुस्त्रिफलकावृत्ताः स्वनामश्रियो
　मध्योक्ता सफला तु शुध्यति दिनं वासाजशृङ्गीरसे २५
स्विन्ना जम्भरसेऽपि तालबलिना वस्वंशकेनाम्भसा
जम्भस्यैव परिप्लुता दशपुटैर्जीवेन्न योगानुगाः ॥ २६ ॥

व्याख्या—तापीजं माक्षिकं द्विविधमुक्त, विमलामाक्षिकभेदात् । इह द्विविधभेदमध्ये, आद्या विमला, सा तु त्रेधा त्रिविधा । विमलाशब्दस्तु त्रिलिङ्गः । एका विमला सुवर्णच्छायानुकारात्; द्वितीया कास्यच्छायानुकारात्, तस्मात्कांस्यविमलाऽप्यस्तीति सूचितं, तृतीया रजतच्छायानुकारात्, तत्तन्नामपूर्विका विमला भवन्ति । यथा—स्वर्णविमला, कास्यविमला, रजतविमला चेति । तत्र स्वर्णविमला स्वर्णमाक्षिकभेदः, कांस्यविमला कास्यमाक्षिकभेदः, एतद्वचनसामर्थ्यादेव कास्यस्यापि माक्षिकोऽस्तीति गम्यते, रजतविमला रजतमाक्षिकभेदः । अथैषा माक्षिकेभ्यो भेदकानि लक्षणान्याह—अमूस्तिस्रोऽपि, अस्र धारा, फलक चिपिट, वृत्तत्वं वर्तुलत्व, स्वनामश्रिय इत्यनेन स्वर्णादिप्रभा उक्ताः, मध्या कास्यविमला सफला उक्ता सचिपिटोक्ता । त्रयाणामपि शोधनमारणमाह—शुध्यन्तीति । दिनं चतुर्याममम् । वासा अटरूषः, अजशृङ्गी मेषशृङ्गी, अनयो रसे चूर्णीकृत्य वस्त्रबद्ध कृत्वा स्विन्नास्तथा निम्बुरसे स्विन्नाः शुध्यन्ति । पश्चात्तालकः शुद्ध, बलिर्गन्धकः सोऽपि शुद्धः, तेन समुचितेन अष्टमाशेन जम्भाम्भसा त्रिवार भाविता दशपुटैर्न जीवेत् म्रियते । पुटे च प्रत्येकं भावना देया । तद्भस्म योगानुगं भवति यत्र रसे उक्तं तत्र प्रयोज्यम् । उक्तं च—

त्रेधा स्याद्विमलः स्वर्णपूर्वको रूप्यपूर्वकः।
कांस्यपूर्वश्च विख्यातस्तत्तत्कान्त्या स लक्ष्यते ॥ २७ ॥
विमलस्तपतीतीरवर्तिन्यद्रिविभागके।
उत्पद्यते परैः कास्यमाक्षिकोऽयमिति स्मृतः ॥ २८ ॥
आद्यो हेमक्रियासूक्तश्चरमः श्वेतकर्मसु।
मध्यो रजतनामा यः स प्रोक्तो वै रसादिषु ॥ २९ ॥

अथ लक्षणगुणाः—

वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः।
मरुत्पित्तहरो वृष्यो विमलश्च रसायनः ॥ ३० ॥

अनुपानमपि रसपद्धत्याम्—

वेल्लव्योषवराज्येन विमलः सेवितो यदि।
भगन्दरादिकान् रोगान्नृणां जयति दुस्तरान् ॥ ३१ ॥

अथ रसपद्धत्याम्—

माक्षीको द्विरहादिमः कनकरुग्दुर्वर्णवर्णोऽपरः
कास्यश्रीकमुशन्ति केचन पर सर्वेऽपि पूर्वत्विषः।
निष्कोणा गुरवः किरन्ति निभृतं घृष्टाः करे कालिका
स्विन्नास्ते रुबुतैललुङ्गसलिलैर्यामेन शुध्यन्ति च ॥३२॥
पक्वा वा घटिकाद्वयेन कदलीकर्कोटिकाकन्दयो-
रम्ब्वा कूर्मपुटैस्त्रिभिः पटुतरं लुङ्गाम्बुगन्धप्लुताः।
स्युर्भस्मानि जघन्यमध्यमशुभास्ते व्युत्क्रमेणोदिता
वृष्याः पाण्डुपटीयसो बलकरा योगोपयुक्ताः पुनः ३३

व्याख्या—माक्षीको द्विविधः—आदिमः कनकरुक्, तेनासौ कनकमाक्षिक इत्यर्थः, परो द्वितीयः, दुर्वर्णवर्णः दुर्वर्णं रजतं तद्वर्णः, अतो रजतमाक्षिकमिति; कास्यश्रीकं कास्यवर्णं केचन आचार्याः पर तृतीयं कास्यमाक्षिकमुशन्ति। सर्वेऽपि माक्षिकत्रयमपि, पूर्वत्विषः विमलाकान्तयोर्भवन्ती-

त्यर्थः । विमलाभ्यो भेदकं लक्षणमाह—निष्कोणा धारारहिताः, गुरवो भारयुक्ताः, करे हस्ते घृष्टाः कालिकां किरन्ति । शुद्धिमाह—स्विन्ना इति । रुबुतैलमेरण्डतैल, लुङ्गं मातुलुङ्गं तत्सलिलैः, कर्कोटिका खेखसा, तस्याः कन्दं मूलं, तयो रम्बा जलेन पक्वाः शु यन्ति । स्वेदनं तु चूर्णीकृत्य दोलायन्त्रेण । पश्चाल्लुङ्गाम्बु मातुलुङ्गरसः, गन्धकश्च, आभ्यां भाविताः, कूर्मपुटैस्त्रिभिर्दग्धा भस्मानि स्युः । ते च व्युत्क्रमेण कास्यतारसुवर्णसंज्ञकाः जघन्यमध्यमोत्तमा उदिताः । वृष्या शुक्रप्रदाः । पाण्डुपटीयसः पाण्डुघ्नाः । तथा बलकराः योगे उपयुक्ताः सन्तो बलकरा भवन्ति । इति माक्षीकविमलानिर्णयः ॥

अथ तुत्थोत्पत्तिनामलक्षणशोधनगुणाः ।

गरुडेनामृत पीत्वा पश्चात्पीत विषं पुरा ।
वान्त मरकताद्रौ तु तद्घन शिखितुत्थकम् ॥ ३४ ॥
तुत्थ वितुन्नक चापि शिखिग्रीव मयूरकम् ।
तुत्थ ताम्रोपधातुः स्यात्किचित्ताम्रेण तद्भवेत् ॥ ३५ ॥
किंचित्ताम्रगुणं तस्माद्वक्ष्यमाणगुण च तत् ।
तुत्थस्यैव भवेद्भेदः खर्पर तद्गुणं च तत् ॥ ३६ ॥
शिखिकण्ठसदृक्छायं भाराढ्यं तुत्थकं च यत् ।
गुणवत्तत्परिज्ञेयमन्यद्धीनगुणं मतम् ॥ ३७ ॥

गुणाः—

तुत्थं तु कटुक क्षारं कषायं वामक लघु ।
लेखनं भेदन शीतं चक्षुष्यं कफपित्तहृत् ॥ ३८ ॥
विषाश्मकुष्ठकण्डूघ्न खर्पर चापि तद्गुणम् ।
वान्ति भ्रान्तिमशुद्धं तत् कुरुते, शोधितं शुभम् ॥ ३९ ॥

१ 'विषापस्मारकण्डुघ्न' ग ।

शोधनम्—

विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः
दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे तथा ॥
पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ॥ ४० ॥

इति तुत्थशुद्धिः । प्रकारान्तरम्—

ओतोर्विशा समं तुत्थं सक्षौद्रं टङ्कणाङ्घ्रियुक् ।
त्रिधैव पुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥ ४१ ॥

प्रकारान्तरम्—

अम्लवर्गेण लुलितं स्नेहसिक्तं हि तुत्थकम् ।
दोलायां वाजिगोमूत्रे दिनं पक्कं विशुध्यति ॥ ४२ ॥

इति तुत्थशुद्धिः । क्वचिन्मारणमप्युक्तं तुत्थकस्य—

गन्धाश्मटङ्कणयुतं लकुचद्रावमर्दितम् ।
अन्धमूषागतं द्वित्रिकुक्कुटैर्मृतिमाप्नुयात् ॥ ४३ ॥

अथ तुत्थसत्त्वाकृष्टिः—

तुत्थकं टङ्कणयुतं निम्बूद्रवविमर्दितम् ।
अन्धमूषागतं ध्मातं सत्त्वं मुञ्चति ताम्रकम् ॥ ४४ ॥

अथात्र मुद्रिकोपयुक्तत्वेन भूनागस्वरूपं सत्त्वाकृष्टिश्च प्रोच्यते

भूनागः क्षितिनागश्च भुजङ्गो रक्तजन्तुकः ।
क्षितिजः क्षितिजन्तुश्च भूमिजो रक्ततुण्डकः ॥ ४५ ॥

गुणाः—

भूनागो वज्रमारः स्यान्नानाविज्ञानकारकः ।
रसस्य जारणे प्रोक्तं तत्सत्त्वं तु रसायनम् ॥ ४६ ॥
वर्षासु वृष्टिसंक्लिन्नभूगर्भे संभवन्ति हि ।
जन्तवः कृमिरूपा ये ते भूनागा इति स्मृताः ॥ ४७ ॥
चतुर्विधास्तु भूनागाः स्वर्णादिखनिसंभवाः ।
स्वर्णभूमिभवाः पीता रूप्यभूमिभवाः सिताः ॥ ४८ ॥

ताम्रभूमिभवास्ताम्राः कृष्णा लोहमयीभवाः ।
रसेन्द्रप्राणरूपास्ते भूनागाः सिद्धसंमताः ॥ ४९ ॥
स्वर्णादिभूमिसंभूता दुर्लभास्ते प्रकीर्तिताः ।
ताम्रभूमिभवा प्रायः सुलभा गुणवत्तराः ॥ ५० ॥

उक्तं च—

ताम्रभूभवभूनागान्निशापिष्टान् समेन तान् ।
गुडगुग्गुलुलाक्षोर्णामत्स्यपिण्याकटङ्कणैः ॥ ५१ ॥
दृढमेतैश्च संयोज्य मर्दयित्वा धमेत्सुखम् ।
मुञ्चन्ति ताम्रवत्सत्त्वं ते, पक्षा अपि बर्हिणाम् ॥ ५२ ॥

ते भूनागाः ॥

भूनागसत्त्वं शिशिरं सर्वकुष्ठव्रणप्रणुत् ।
तद्युक्तजलपानेन स्थावरं चापि जङ्गमम् ॥ ५३ ॥
विषं नश्यति, तत्पात्रगतः सूतोऽग्नितो दृढम् ।
एवं मयूरपक्षोत्थसत्त्वस्यापि गुणा मताः ॥ ५४ ॥

दृढं बध्यते इत्यर्थः । इति भूनागसत्त्वमयूरपक्षसत्त्वगुणाः ॥

प्रकारान्तरेण तुत्थसत्त्वम्—

तुत्थस्य टङ्कणं पादं चूर्णयेन्मधुसर्पिषा ।
तुत्थेन मिश्रितं ध्मातं कोष्ठीयन्त्रे दृढाग्निना ।
ध्मापितं द्रवते सत्त्वं कीरतुण्डसमप्रभम् ॥ ५५ ॥

इति तुत्थसत्त्वम् । रसपद्धत्या तुत्थसत्त्वभूनागसत्त्वयोर्मिलितयोर्मुद्रिकायाः फलमुक्तम्—

घस्रं पूतिकरञ्जतैलनिहितं पादांशसौभाग्यकं
ध्मातं तुत्थरजोऽथ पात्रपिहितं दीप्तैरलातत्रयैः ।
यद्वा मानुषनीलकेशनिहितं मुञ्चेत्क्षणात्तुत्थकं
ताम्रं शोणितबिन्दुबन्धुरमदो भूनागसत्त्वं तथा ॥५६॥

---

१ 'सामिकरञ्ज°' ख ।

एताभ्या रविवासरे रचितया संप्लावितं मुद्रया
पीत वारि विषद्वयग्रहहरं सद्यः प्रसूतिप्रदम्।
तद्वत्तत्परिमृष्टतप्ततिलजस्नेहोऽमुना मन्त्रितो
मन्त्रेणाशु निहन्ति शूलमतुलं दृग्दोषभूतग्रहम् ॥ ५७ ॥
सद्यः स्त्रीप्रसवप्रदो निगदितः सद्यो व्रणारोपणो
लिप्तो लोचनयोर्हितो विनिहितः प्राग्भालुकिप्रोदितः ॥

व्याख्या—घस्रमित्यादि। दुर्गन्धिकरञ्जतैले दिन निहितं पश्चात्पादांशटङ्कणयुतं पश्चात्तुत्थरजो मर्दितमन्धमूषाया निहितं दीप्तकाष्ठत्रयैर्ध्मातं सत्त्व मुञ्चति। प्रकारान्तरमाह—यद्वा मानुषकेशैरेकीकृत्य ध्मात क्षणात्ताम्र शोणितबिन्दुबन्धुरं सत्त्वं मुञ्चेत्। अथैवमेव भूनागसत्त्व ग्राह्यमित्याह—अदो भूनागेति एवमेव भूनागसत्त्व निष्कासयेत्। मुद्रिकोपयुक्तत्वेनात्रैवोक्तम्। उभाभ्या मिलिताभ्या रविवारे रचितया मुद्रया संप्लावित वारि पीत विषद्वय स्थावरजङ्गमविषं, ग्रहाः स्कन्दादयः, एतेषा नाशक, सद्यः स्त्रीप्रसवजनकं च। गुणान्तरमाह—तद्वदिति, परिमृष्टस्तप्ततिजलस्नेहः अनया मुद्रया मिश्रितः वक्ष्यमाणेन मन्त्रेण मन्त्रितः अतुल शूलं लेपनमात्रेण निहन्ति, तथा दृग्दोष भूतग्रह चेति। तथा सद्यः स्त्रीप्रसवदो भक्षितः, लिप्तः सन् सद्यो व्रणारोपणः, विलोचनयोर्निहितो नेत्ररोगहर्ता भवति। इति ॥

भालुकिप्रोदितमन्त्रस्तु—

'रामवत्सोमसेनानीमुद्रितेति (केऽपि ?) तथाऽक्षरम्।
हिमालयोत्तरे पार्श्वे अश्वकर्णो महाद्रुमः।
तत्र शूलं समुत्पन्नं तत्रैव विलयं गतम्' ॥ ५८ ॥ इति।

अथ प्रकारान्तरं भूनागसत्त्वस्य—सुवर्णरूप्यताम्रायस्कान्तभूमिषु जातान् भूनागान् तद्विष्ठां वा तदुत्पत्तितत्सं-

श्लिष्टमृत्तिका वा रजनीतोयेन प्रक्षाल्य, क्षुधित कुक्कुट मयूरं वा क्रमेण चारयित्वा, तद्विष्ठा कुडवमात्रां गृहीत्वा, क्षाराम्लैः सह पेषयित्वा, विशोष्य, खर्परे दत्त्वा, भर्जन कुर्यात् । ता मषी द्रावणवर्गेणैकीकृत्य, मूषामध्ये निवेश्य, घटिकाद्वय धमेत् । तस्मिन् शीतीभूते खोटकमाहृत्य प्रक्षालयित्वा रवकान् संगृह्य टङ्कण दत्त्वा सुवर्णवद्धमेत् । तस्यैकीभूतस्य भूनागताम्रस्य मयूरतुत्थताम्रस्य च मिश्रणेन मुद्रिका कार्या, सा प्रोक्तगुणा भवति । सुवर्णेन युक्ताऽपि वा मुद्रिका कार्या, साऽप्यचिन्त्यसामर्थ्या भवति । अथ तदुत्पत्तिमृत्तिकादिक तु भृङ्गनिर्गुण्डीद्रवैर्द्रावणवर्गेण चैकीकृत्य मर्दयेत्, पश्चाद्दृढमूषाया वटकीकृतं प्रक्षिप्य घटीद्वयं धमेत् । तत्पक्वं विचूर्ण्य रवकान् भारवत्तरानणून् द्वादशशताम्रयुक्तान् कृत्वा धामयित्वा रवकान् कुर्यात् । तेन वज्रादिद्रावण कुर्यात् । इद वारद्वय त्रय वज्रे दत्त द्रुत भवति । इद तु वज्रस्य पारदस्य (?) द्रावणार्थे परमतेजो भवति । गुणास्तु प्रागुक्ताः । इति भूनागसत्त्वनिरूपणम् ॥

विशुद्ध तुत्थक योज्यमञ्जनादौ भिषग्वरैः ।

### अथ कांस्यपित्तलयोरुत्पत्तिनामलक्षणगुणशोधनमारणानि ।

अष्टभागेन ताम्रेण द्विभाग कुटिलं युतम् ।
एकत्र द्रावित तत्स्यात्कास्यं सौराष्ट्रज शुभम् ॥ ५९ ॥
ताम्रं त्रपुजमाख्यातं कांस्यं घोषं च कसकम् ।
उपधातुर्भवेत्कास्य द्वयोस्तरणिरङ्गयोः ॥ ६० ॥
कास्यस्य तु गुणा ज्ञेयाः स्वयोनिसदृशा बुधैः ।
सयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः ॥ ६१ ॥

यथा—

कांस्यं कषाय तिक्तोष्णं लेखनं विशद सरम् ।
गुरु नेत्रहितं रूक्ष कफपित्तहरं परम् ॥ ६२ ॥

कांस्यं च द्विविध प्रोक्तं पुष्पतैलिकभेदतः ।
पुष्पं श्वेततमं तत्र तैलिकं कपिशप्रभम् ।
एतयोः प्रथमं श्रेष्ठ संसेव्यं रोगशान्तये ॥ ६३ ॥

अथ पित्तलम्—

पित्तल त्वारकूटं स्यादारो रीतिश्च कथ्यते ।
राजरीतिर्ब्रह्मरीतिः कपिला पिङ्गलाऽपि च ॥ ६४ ॥

रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च ।
पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा बुधैः ॥ ६५ ॥

संयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः ।
रीतिका द्विविधा प्रोक्ता तत्राद्या राजरीतिका ॥ ६६ ॥

काकतुण्डी द्वितीया स्यात्तयोराद्या गुणाधिका ।
संतप्ता काञ्जिके क्षिप्ता ताम्रा स्याद्राजरीतिका ॥ ६७ ॥

काकतुण्डी तु कृष्णा स्यान्नासौ सेव्या विजानता ।
श्वेतं दीप्तं मृदुज्योतिः शब्दाढ्य स्निग्धनिर्मलम् ॥ ६८ ॥

घनाग्निसहसूत्राङ्गं कांस्यमुत्तममीरितम् ।
शुद्धा स्निग्धा मृदुः शीता सुरङ्गा सूत्ररूपिणी ।
हिमोपमा शुभा स्वच्छा राजरीतिः प्रकीर्तिता ॥ ६९ ॥

गुणाः—

रीतिकायुगलं रूक्ष तिक्तं च लवणं रसे ।
शोधनं पाण्डुरोगघ्न क्रिमिघ्न नातिलेखनम् ॥ ७० ॥

एतस्य भस्म तु निम्बाष्टकचूर्णेन सह भल्लाततिलब्रह्मबीजाजमोदाग्निभिः सेवितं जन्तुघ्नं भवति श्वेतकुष्ठहरं च भवति ।

सुवर्णरीतिचूर्णमन्नादिना छागेन भक्षितं तद्विष्ठा खर्परे लिप्त्वा पश्चात्तत्खर्परं दग्धं रीतिं मुञ्चति। ता रीतिमेकीकृत्य, आवर्त्य, मुद्रिका कृत्वा धारयेत् । सा सुवर्णचतुर्दशवर्णतुल्या भवति ।

अथोभयोः शोधनमारणम्—

पत्तलीकृतपत्राणि कांस्यरीत्योः प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥ ७१ ॥
गोमूत्रे च कुलत्थाना कषाये च त्रिधा त्रिधा ।
एव कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते ॥ ७२ ॥

विशेषशोधन यथा—

गोमूत्रेण पचेद्यामं कांस्यपत्राणि बुद्धिमान् ।
दृढाग्निना विशुध्यन्ति पक्वान्यम्लद्रवेऽपि वा ॥ ७३ ॥
रीतिस्तप्ता तु निर्गुण्डीरसे श्यामारजोन्विते ।
निषिक्ता शुद्धिमायाति पक्वा वाऽम्लद्रवेऽपि च ॥ ७४ ॥

अथ मारणम्—

अर्कक्षीरेण संपिष्टो गन्धकस्तेन लेपयेत् ।
समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः ॥ ७५ ॥
ततो मूषापुटे धृत्वा पुटेद्गजपुटेन च ।
एवं पुटद्वयात्कांस्यं रीतिश्च म्रियते ध्रुवम् ॥ ७६ ॥

अन्यच्च—

कांस्यकं राजरीतिं च ताम्रवच्छोधयेद्भिषक् ।
ताम्रवन्मारणं चापि तयोरुक्तं भिषग्वरैः ॥ ७७ ॥

### अथ भर्तसंज्ञं पञ्चलोहं पञ्चरसनामकमधिकोपधातुर्भवति ।

यथा—

कांस्यं रीतिस्तथा ताम्रं नागो वङ्गश्च पञ्चमः ।
एकत्र द्रावितैरेतैः पञ्चलोहं प्रजायते ॥ ७८ ॥

नामानि—

पञ्चलोहं पञ्चरसं वर्तुल भर्तमित्यपि।
व्यञ्जनं सूपमन्यच्च तद्भाण्डे साधितं शुभम् ॥ ७९ ॥
आदौ तैलादिके शोध्यं पश्चात्तप्त्वाऽजमूत्रके।
निषिक्तं शुद्धिमायाति पञ्चलोह न संशयः ॥ ८० ॥
अर्कक्षीरेण संपिष्टगन्धतालकलेपनात्।
पञ्चकुम्भिपुटैर्भर्त म्रियते योगवाहकम् ॥ ८१ ॥

इति भर्तमारणम् ॥

घृतवर्ज बुधैः सर्व पाच्य कांस्यस्य पात्रके।
भोजन तु प्रशस्त स्याद्रीतिका मध्यमा स्मृता ॥ ८२ ॥

## अथ सिन्दूरम्।

सिन्दूर रक्तरेणुश्च नागगर्भ च सीसकम्।
सीसोपधातुः सिन्दूरं गुणैस्तत्सीसवन्मतम् ॥ ८३ ॥
संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः।
सिन्दूरमुष्ण वीसर्पकुष्ठकण्डुविषापहम्।
भग्नसन्धानजननं व्रणशोधनरोपणम् ॥ ८४ ॥

अथ शोधनं, तत्र शोधनयोग्यसिन्दूरलक्षणम्—

सुरङ्गोऽग्निसहः स्निग्धः सूक्ष्मः स्वच्छो गुरुर्मृदुः।
सुवर्णाकरजः शुद्धः सिन्दूरो मङ्गलप्रदः।
दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैः ॥ ८५ ॥

मतान्तरम्—

सिन्दूर निम्बुकद्रावैः पिष्ट्वा घर्मे विशोषयेत्।
ततस्तण्डुलतोयेन तथाभूत विशुद्ध्यति ॥ ८६ ॥
सिन्दूरस्य प्रयोगो हि न दृष्टः कुत्रचित् पृथक्।
तस्मादुक्तस्थले योज्यमुपदेशो गुरोरिति ॥ ८७ ॥

**अथ शिलाजतोरुत्पत्तिनामलक्षणगुणशोधनानि ।**

शिलाजतु द्विधा प्रोक्तं तत्राद्यं गिरिसंभवम् ।
द्वितीयं स्यात्क्षारभूम्या मृत्तिकाजलयोगतः ॥ ८८ ॥

आद्य यथा—

निदाघे घर्मसंतप्ता धातुसारं धराधराः ।
निर्यासवत्प्रमुञ्चन्ति तच्छिलाजतु कीर्तितम् ॥ ८९ ॥
सौवर्णं राजतं ताम्रमायसं च चतुर्विधम् ।
शिलाजतु हि विज्ञेयं तत्तल्लक्षणलक्षितम् ॥ ९० ॥
सौवर्णं तु जपापुष्पवर्णं भवति शैलजम् ।
मधुरं कटु तिक्तं च शीतलं कटुपाकि च ॥ ९१ ॥
राजतं पाण्डुरं शीत कटुकं स्वादुपाकि च ।
ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णं च जायते ॥ ९२ ॥
लौह जटायुपक्षाभ तत्तिक्तं लवण भवेत् ।
विपाके कटुकं शीतं सर्वश्रेष्ठमुदाहृतम् ॥ ९३ ॥

अन्यच्च—

गोमूत्रगन्धि यत्कृष्णं स्निग्धं मृदु तथा गुरु ।
तिक्तं कषायं शीतं च सर्वश्रेष्ठ तदायसम् ॥ ९४ ॥

लक्षणान्तरम्—

यत्तु गुग्गुलुसंकाशं तिक्तं च लवणान्वितम् ।
विपाके कटु शीतं च सर्वश्रेष्ठं तदायसम् ॥ ९५ ॥
वातपित्ते तु सौवर्णं श्लेष्मपित्ते तु राजतम् ।
ताम्रजं कफरोगेषु लोहजं तत्रिदोषनुत् ॥ ९६ ॥
विन्ध्याद्रौ बहुलं तेषु तत्र लौहं यतोऽधिकम् ।
तच्छोधनमृते व्यर्थमनेकमलमेलनात् ॥ ९७ ॥

विशेषगुणाः—

शिलाह्वं कटु तिक्तोष्णं कटुपाकं रसायनम् ।

छेदि योगावहं हन्ति कफमेहाश्मशर्कराः ॥ ९८ ॥
मूत्रकृच्छ्रं क्षयं श्वासं वातास्रार्शांसि पाण्डुताम् ।
अपस्मार तथोन्माद शोथकुष्ठोदरकृमीन् ॥ ९९ ॥

अथाशुद्धशिलाजतुगुणाः—

अशुद्धं दाहमूर्च्छायभ्रमपित्तास्रशोषकृत् ।
शिलाजतु प्रकुरुते मान्द्यमग्नेश्च विड्ग्रहम् ॥ १०० ॥

अथ शोधनम्—

शिलाजतु समानीय लोहजं लक्षणान्वितम् ।
बहिर्मलमपाकर्तुं क्षालयेत्केवलाम्बुना ॥ १०१ ॥

अथ तस्यान्तर्मलविनाशोपायमाह हारीतः—
लोहस्थित निम्बगुडूचिसर्पिर्यवैर्यथावत्परिभावयेत्तत् ।
संतानिकाकीटपतङ्गदंशदुष्टौषधीदोषनिवारणाय ॥ १०२ ॥

सन्तानिका अन्तःसंमिश्रिता दुष्टमृत्तिका । अत्र भावनार्थ क्वाथकल्पनामाह वाग्भटः—

तुल्यं गिरिजेन जले वसुगुणिते भावनौषधं क्वाथ्यम् ।
तत्क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥ १०३ ॥
तत्समरसता यातं संशुष्क प्रक्षिपेद्रसे भूयः ।
स्वैः स्वैरेवं क्वाथैर्भाव्य वारान् भवेत्सप्त ॥ १०४ ॥

अथैवं भावना दत्त्वा, संशोष्य, केवलेन जलेन शोधनं कर्तव्यम् । तत्प्रकारमाहाग्निवेशः—
उष्णेऽथ काले रवितापयुक्ते व्यभ्रे निवाते समभूमिभागे ।
चत्वारि पात्राण्यसितायसानि न्यस्यातपे तत्र कृतावधानः१०५
शिलाजतु श्रेष्ठमवाप्य पात्रे प्रक्षिप्य तस्माद्द्विगुणं च तोयम् ।
उष्णं तदर्धं क्वथितं च दत्त्वा विशोधयेत्तन्मृदितं यथावत्१०६
सुवस्त्रपूतं प्रविधाय तत्तु संस्थापनीयं पुनरेव तत्र ।
ततस्तु यत्कृष्णमुपैति चोर्ध्वं संतानिकावद्रविरश्मितप्तम् १०७

पात्रे तदन्यत्र ततो विदध्यात्तस्यान्तरे कोष्णजल निधाय ।
ततश्च तस्मादपरत्र पात्रे तस्माच्च पात्रादपरत्र भूयः ॥ १०८ ॥
पुनस्ततोऽन्यत्र निधाय कृष्णं यत्संहृतं तत्पुनराहरेच्च ।
यदा विशुद्धं जलमच्छमूर्ध्वं प्रसन्नभावान्मलमेत्यधस्तात् १०९
तदा त्यजेत्तत्सलिलं मलं च शिलाजतु स्याज्जलशुद्धमेवम् ।
चतुर्थपात्राद्गलितं हि सर्वं परीक्षण तस्य वदामि भूयः॥११०॥

यथा—

वह्नौ क्षिप्तं तु निर्धूमं पक्त्वा लिङ्गोपमं भवेत् ।
तृणाग्रेणाम्भसि क्षिप्तमधो गलति तन्तुवत् ।
गोमूत्रगन्धि मलिन शुद्धं ज्ञेय शिलाजतु ॥ १११ ॥

एवं शुद्धस्य गुणाः प्रागुक्ताः । अथ नामानि—

शिलाजत्विन्द्रजतु च शैलनिर्यास इत्यपि ।
गैरेयमश्मजं चापि गिरिजं शैलधातुजम् ॥ ११२ ॥

अथ शीघ्रकार्यवशात्संक्षिप्तशोधनं यथा—

गोदुग्धत्रिफलाभृङ्गद्रवैः पिष्टं शिलाजतु ।
दिनैक लोहजे पात्रे शुद्धिमायात्यसशयम् ॥ ११३ ॥

इति संक्षिप्तशुद्धिः । अथैवं शुद्धस्य गुणोत्कर्षाय भावना प्रोक्ता—

त्रिफलावारिगोदुग्धमूत्रैर्भाव्यं शिलाजतु ।
स्वल्पं स्वल्पं विधानेन स्थापयेत्काचपात्रके ॥ ११४ ॥
अगुर्वादिशुभैर्धूपैर्धूपयेत्तत्प्रयत्नतः ।
मात्रया शीलयेत्पश्चात्स्निग्धशुद्धो यथाविधि ॥ ११५ ॥
एकत्रिसप्तसप्ताहं कर्षमर्धपलं पलम् ।
हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः ॥ ११६ ॥
क्षीरेणालोडितं कुर्याच्छीघ्रं रासायनं फलम् ।
हन्याद्रोगानशेषांश्च जीर्णे हितमिताशनः ॥ ११७ ॥

व्यायामातपमारुतचेतःसंतापगुरुविदाह्यादि ।
उपयोगादपि परतो द्विगुणं परिवर्जयेत्कालम् ॥ ११८ ॥
कुलत्थान् काकमाची च कपोतांश्च सदा त्यजेत् ।
पिबेन्माहेन्द्रमुदकं कौपं प्रास्रवणाम्बु वा ॥ ११९ ॥

न सोऽस्ति रोगो भुवि साध्यरूपो जत्वश्मजं यं न जयेत्प्रसह्य ।
तत्कालयोगैर्विधिवत्प्रयुक्तं स्वस्थस्य चोर्जां विपुला दधाति १२०

सर्वानुपानैः सर्वेषु रोगेषु विनियोजितम् ।
जयत्यभ्यासतो नूनं तांस्तान् रोगान्न संशयः ॥ १२१ ॥
रसोपरससूतेन्द्ररत्नलोहेषु ये गुणाः ।
विशन्ति ते शिलाधातौ जरामृत्युजिगीषया ॥ १२२ ॥

अस्य भस्मप्रकारो रसपद्धत्याम्—

शिलया गन्धतालाभ्या मातुलुङ्गरसेन च ।
पुटितं हि शिलाधातु म्रियतेऽष्टगिरिण्डकैः ॥ १२३ ॥

सत्त्वप्रकारस्तु—

पिष्टं द्रावणवर्गेण साम्लेन गिरिसंभवम् ।
रुद्ध्वा मूषोदरे ध्मातं कोकिलैः सत्त्वमृच्छति ॥ १२४ ॥

अथ द्वितीयं शिलाजतु रसपद्धत्याम्—

द्वितीयं सोरकाख्य स्याच्छ्वेतवर्णं शिलाजतु ।
अग्निबाणोपयुक्तं तद्धितं[1] मूत्रामयेषु च ॥ १२५ ॥

उक्त च—

पाण्डुरं सिकताकारं कर्पूराभं शिलाजतु ।
मूत्रकृच्छ्राश्मरीमेहकामलापाण्डुनाशनम् ॥ १२६ ॥

---

१ रसपद्धत्यामेव पठ्यते,–“वह्न्युत्तेजनमुज्ज्वल यदपर मूत्रामयिभ्यो हितम्”–इति, “वह्न्युत्तेजनमिति यदपर श्वेत शिलाजतु तद्वह्न्युत्तेजक वह्निप्रदीपक, अत्र जठराग्निर्न ग्राह्य , किंतु अग्निशस्त्राणि, तत्राग्ने प्रदीपक , ‘सोरा’ इति लोके प्रसिद्ध , अग्निबाणेषु ( अग्न्यस्त्रेषु ‘दारु–बारुद Gunpowder’ इति प्रसिद्धपदार्थनिर्माणार्थ ) प्रयुज्यते” इति रसपद्धतिटीकाया महादेव ।

एलातोयेन संभिन्न सिद्धं शुद्धिमुपैति तत् ।
नैतस्य मारणं सत्त्वपातनं विहितं बुधैः ॥ १२७ ॥

उत्पत्तिस्तु मृत्तिकाविशेषाज्जलविशेषाज्जायते ॥

इत्युपधातुनिरूपणम् ॥

अथ चपलाख्य उपधातुरधिकोऽस्ति । तद्यथा रसपद्धत्याम्—

चत्वारश्चपला सितासितहरिच्छोणप्रभेदैः पुन-
र्मोघौ शोणितशोणकज्जलनिभौ लाक्षावदाशुद्रवात् ।
शेषौ तु द्रवतश्चिरेण सुभगौ तौ शुध्यतः सप्तधा
कर्कोट्यार्द्रकजम्भलस्य सलिले संस्वेदितौ वा प्लुतौ १२८
प्राथम्याद्रसबन्धिनौ तदुपरि स्याता तु योगानुगौ
वृष्यौ दोषहरौ बुधैर्निगदितौ माक्षीकभूम्युद्भवौ ।

मोघौ निष्फलौ । शेषौ हरितसितौ । सुभगौ गुरुतरौ । प्राथम्यात्प्रथमतस्तु रसबन्धकौ भवत' । शेषं स्पष्टम् । अन्यत्रापि—

चतुर्धा चपलः प्रोक्तः श्वेतः कृष्णोऽरुणो हरित् ।
वङ्गवत्प्लवते वह्नौ चपलस्तेन कीर्तितः ॥ १२९ ॥

गुणाः—

चपलः स्फटिकच्छायः षडस्त्री स्निग्धको गुरुः ।
त्रिदोषघ्नोऽतिवृष्यश्च रसबन्धविधायकः ॥ १३० ॥
अयं तूपरसे कैश्चित्पठितोऽन्यै रसेषु च ।
विषोपविषधान्याम्लैर्मर्दितश्चपलस्ततः ।
अन्धमूषागतो ध्मातः सत्त्वं मुञ्चति कार्यकृत् ॥ १३१ ॥

इति चपलः ॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतंसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे द्वादशोऽध्याय ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः ।

अथ रत्नोपरत्नानामुत्पत्तिनामलक्षणगुणशोधनमारणानि ।

उक्तं च—

मणयोऽपि च विज्ञेयाः सूतबन्धस्य कारकाः ।
देहस्य धारका नृणां जराव्याधिविनाशकाः ॥ १ ॥

रत्ननिरुक्तिः—

धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् ।
अतो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥ २ ॥

अथ रत्ननामानि स्वरूपनिरूपणं च—

रत्नं क्लीबे मणिः पुंसि स्त्रियामपि निगद्यते ।
तत्तु पाषाणभेदोऽस्ति वज्रादि च तदुच्यते ॥ ३ ॥

रसपद्धत्याम्—

वज्र विद्रुममौक्तिके मरकतं वैडूर्यगोमेदके
माणिक्यं हरिनीलपुष्पदृषदौ रत्नानि नाम्ना नव ।
यान्यन्यान्यपि सन्ति कानिचिदिह त्रैलोक्यसीम्नि स्फुटं
नाम्ना तान्युपरत्नतान्युपगतान्याहुः परीक्षाकृतः ॥ ४ ॥

वज्रं हीरकः, विद्रुमं प्रवालं, मौक्तिकं मुक्ता, मरकतं गरुडोद्गारः 'पन्ना' इति भाषा, वैडूर्यं विदुरमणिः, गोमेदः अनेनैव नाम्ना प्रसिद्धः, माणिक्यं पद्मरागः, हरिनीलः इन्द्रनीलः, पुष्पदृषत् पुष्परागः । शेषं स्पष्टम् ॥

विष्णुधर्मोत्तरेऽपि—

मुक्ताफलं हीरकं च वैडूर्यं पद्मरागकम् ।
पुष्परागं च गोमेदं नील गारुत्मतं तथा ।
प्रवालयुक्तान्येतानि महारत्नानि वै नव ॥ ५ ॥ इति ॥

उपरत्नान्यन्यत्र—

वैक्रान्तः सूर्यकान्तश्च चन्द्रकान्तस्तथैव च ।
राजावर्तो लालसंज्ञः पेरोजाख्यस्तथाऽपरः ॥ ६ ॥

मुक्ताशुक्तिस्तथा शङ्खकर्पूराश्माऽथ काचजाः ।
नीलपीतादिमणयोऽप्यन्ये विषहरा हि ये ॥ ७ ॥
वह्न्यादिस्तम्भका ये च ते सर्वे हि परीक्षकैः ।
उपरत्नेषु गणिता मणयो लोकविश्रुताः ॥ ८ ॥

अथ रत्नाना नामानि—

हीरकः पुंसि वज्रोऽस्त्री चन्द्रो मणिवरश्च सः ।
गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ॥ ९ ॥
माणिक्य पद्मरागः स्याच्छोणरक्तं च लोहितम् ।
पुष्परागो मञ्जुमणिः स्याद्वाचस्पतिवल्लभः ॥ १० ॥
इन्द्रनीलं च नील च, गोमेदः पीतरक्तकम् ।
वैडूर्यं दूरजं रत्नं स्यात्केतुग्रहवल्लभम् ॥ ११ ॥
मौक्तिकं शौक्तिकं मुक्ता तथा मुक्ताफलं च तत् ।
पुसि क्लीबे प्रवालः स्यात्पुमानेव तु विद्रुमः ॥ १२ ॥
शुक्तिः शङ्खो गजक्रोडः फणिर्मत्स्यश्च दर्दुरः ।
वेणुश्चाष्टौ समाख्याता सुज्ञैर्मौक्तिकयोनयः ॥ १३ ॥

### अथ हीरकोत्पत्तिलक्षणानि ।

दधीच्यस्थ्नः समुत्पन्नः पविस्तस्य कणाः क्षितौ ।
विकीर्णास्ते तु वज्राख्या भजन्ते तच्चतुर्विधम् ॥ १४ ॥
श्वेतं द्विजाभिधं रक्तं क्षत्रियाख्यं तदीरितम् ।
पीतं वैश्याख्यमुदितं कृष्णं स्याच्छूद्रसंज्ञकम् ॥ १५ ॥
विप्रो रसायने प्रोक्तः सर्वसिद्धिप्रदायकः ।
क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः परः ॥ १६ ॥
वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य दार्ढ्यकृत् ।
शूद्रो नाशयति व्याधीन् वयःस्तम्भं करोति च ॥ १७ ॥
स्त्रीपुंनपुंसकाश्चैते लक्षणीयाश्च लक्षणैः ।
सुवृत्ताः फलसंपूर्णास्तेजोयुक्ता बृहत्तराः ॥ १८ ॥

पुरुषा हीरकास्ते वै रेखाबिन्दुविवर्जिताः।
रेखाबिन्दुसमायुक्ताः षडस्रास्ते स्त्रियः स्मृताः ॥ १९ ॥
त्रिकोणाश्च सुदीर्घाश्च विज्ञेयास्ते नपुंसकाः।
सर्वेषु पुरुषा श्रेष्ठा वेधका रसबन्धकाः ॥ २० ॥
स्त्रियः कुर्वन्ति कायस्य कान्ति स्त्रीणा सुखप्रदाः।
नपुंसकास्त्ववीर्याः स्युरकामाः सत्त्ववर्जिताः ॥ २१ ॥
स्त्रियः स्त्रीभ्यः प्रदातव्या क्लीबान् क्लीबे प्रयोजयेत्।
सर्वेभ्यः पुरुषा योज्या बलाढ्या वीर्यवर्धनाः ॥ २२ ॥

अथ रसपद्धत्या हीरकोत्पत्तिरन्यथोक्ता। यथा—

जातः प्राग्बलनामको दितिसुतोऽवध्यस्त्रिलोक्या पुन-
र्दैवैर्देहमयं मखे मणितनुः सर्वात्मना याचितः।
दत्त्वाऽथ स्वशरीरमव्यथमय धीरः सुराणां पुर-
स्तस्थौ तैः स तु सप्ततन्तुभुजिभिः स्वर्गेश्वरायार्पितः २३
चिच्छेदाथ शिरोऽस्य वज्रशिरसो वज्रेण वज्री पुन-
र्भूतो रत्नसमुच्चयो बल इति स्माहुः पुराणर्षयः।
मूर्ध्नो वा वदनादमुष्य पवयो ये जज्ञिरे ते द्विजा
बाहुभ्यामुरसोऽस्य ये समभवंस्ते संस्मृताः क्षत्रियाः२४
नाभीतः कटितश्च ये निपतितास्ते नाम भूमिस्पृशो
जानुद्वन्द्वपदद्वयप्रपतितास्ते नाम शूद्रा मताः ॥ २५ ॥

प्राक् कृतयुगे। मखे तत्कृतयज्ञे। अजेयत्वाच्छत्रोरयं देहयाचनावसर इति भावः। सप्ततन्तुभुजिभिर्यज्ञभुग्भिः। शेषं स्पष्टम्। पुनः प्रकारान्तरेण हीरकोत्पत्तिः—

पूर्वं मन्दरमथ्यमानजलधिप्रत्युत्थिता या सुधा
तां प्रायः पिबतः सुरासुरगणस्यास्यादिमे बिन्दवः।
ये भूमौ पतिता विकर्तनकरव्रातैः[1] पुनः शोषिता-
स्ते वज्राण्यभवञ्जनुर्ननु पवेरित्यूचिरे केचन ॥ २६ ॥

---

[1] विकर्तन सूर्य, तत्करव्राता किरणसमूहा, तै।

स्पष्टम् । अत्र युगभेदेन व्यवस्था, अस्तु वा त्रिभ्य उत्पत्तिः, तथा सति किं बाधकम् । अथैवमुत्पत्तिमुक्त्वा हीरकस्याष्टप्रकारकं विज्ञानमाह—

उत्पत्तिर्गुणदोषजातिखनयो हस्ताङ्गुलीचालनं
　मूल्यं मण्डलिकेति रत्नदृषदां ज्ञानं वर चाष्टधा ।
अत्रैकप्रसरेण नोक्तमपि तत्तत्परीक्षास्थल-
　श्लोकश्लोकितमेकशः खलु विदाकुर्वन्तु वैज्ञानिकाः॥२७

मण्डली रत्नपरीक्षकाणा सभा । उत्पत्त्यादिकं भिन्नभिन्नश्लोकोक्तमपि परीक्षावसरे एकशः एकत्र विदांकुर्वन्तु जानन्त्विति । एतेन समस्तश्लोकैर्व्यस्तश्लोकैरपि एकीभूतैरिव हीरकपरीक्षा कर्तव्येति भावः । भूमिं प्रतिपाद्य पवेर्भेदानाह—

ब्रह्मक्षत्रियवैश्यशूद्रविभिदा ज्ञेयाश्चतुर्धा पवेः
　पुंस्त्रीक्लीबविभागतः पुनरसौ प्रत्येकमुक्तस्त्रिधा ।
तत्र श्वेतरुचिर्द्विजः स्फटिकवद्रक्तस्तु किंचिन्नृपो
　वैश्यः पीतरुगङ्घ्रिजस्त्वसितभास्तत्राप्ययं पूरुषः ॥ २८॥
रेखाबिन्दुविवर्जितोऽष्टफलकः स्वच्छच्छविर्यो भवे-
　त्सा स्त्री या तु षडस्रबिन्दुसहितो रेखान्वितोदाहृतः ।
निष्कोणाश्चिपिटास्त्रिकोणवपुषो दीर्घा विपुस्त्वा पुन-
　र्धार्याः स्त्रीनृनपुंसकैर्युवतिपुंषण्डाभिधानाः क्रमात् २९

व्याख्या—यः स्फटिकवच्छ्वेतरुचिः स द्विजः, यः किंचिद्रक्तः स नृपः क्षत्रियः, शेषं स्पष्टम् । अथोत्तमपवेः संधारणादिभिर्धर्मार्थौ भवत इत्याह—

यद्वेदाध्ययनात्क्रतोरपि कृतेर्दानस्य वा यत्फलं
　तत्प्राप्नोति पुमानतो वरतनोर्वज्रस्य संधारणात् ।

---

१ 'वदन्त्यष्टधा' ग । २ 'अथैकप्रसरेण' ग । ३ 'तज्ज्ञान' ग ।

चातुर्वर्ण्यपरिग्रहादपि चतुर्वर्णाश्रयश्रेयसा
संयुक्तामुररीकरोतु न कथंकार स भूतिं पराम् ॥ ३० ॥
अथ शूद्रवर्णोऽपि पविर्द्विजवर्णात्पवेरधिक इत्याह—
शूद्रादप्यधमो द्विजो यदि गुणैर्हीनः पविर्ब्राह्मणा-
दप्युच्चैरयमर्घमर्हति पुनः शूद्रो गुणैर्गौरवात् ।
आधिव्याधिसरीसृपानलरिपुव्याघ्रापमृत्युग्रहा-
स्तं नैवाभिभवन्ति यस्य सदने तिष्ठेत्पवित्रः पविः ३१
अथ पवेर्दोषानुपदिशति—
बिन्दुः काकपदं यवः किल मलो रेखेति नाम्नोदिता
दोषाः पञ्च पवेरथात्र कथिता बिन्दुः समो बिन्दुना ।
कृष्णो रक्त इति क्रमेण स पुनर्द्वेधा मतो वर्तुला-
वर्ताकारभिदा ग्रहीतुरफलः शस्तो न सर्वोऽपि सः ३२
ग्रहीतुर्ग्राहकस्य अफलः धनादिलाभस्याकर्ता । सर्वोऽपि बिन्दुर्न शस्तः । अथ काकपदं लक्षयति—
ज्ञेयं काकपदं तु काकचरणाकार परीक्षाकृता
वज्रे श्रीमति सस्थितं पुनरिदं धर्तुर्भवेन्मृत्युदम् ।
यवं लक्षयति—
रक्तापीतसितासितच्छविभिदा ज्ञेयश्चतुर्धा यवा-
कारस्तत्र यवः सितः खलु पवेः पूज्योऽपरे निन्दिताः॥३३॥
अथ मलं लक्षयति—
[1]धाराकोणकमध्यसंस्थिततया त्रेधा मलो रत्नवि-
द्व्याख्यातः स पुनर्ग्रहीतुरनलव्याघ्रादिभीतिप्रदः ।
अथ रेखा लक्षयति—
सव्यासव्यनिवासिनी तदपरा तत्र स्थिता छेदिनी
छिन्ना चोर्ध्वगतिर्गतोर्ध्वमिति ता रेखाश्चतस्रो मताः॥३४॥

---

१ 'धारायामथ कोणयोर्निगदितो मध्ये च लौहो मलस्त्रेधा सोऽप्यनलादिभीतिजननो धर्तुर्भवेन्निश्चितम्' इति रसपद्धत्या पाठ ।

अथ तासा निन्दामाह—

सव्या तत्र शुभा पराः पुनरमूर्दौर्भाग्यदा वर्तुले-
ऽप्यन्तर्भेदिनि लग्नकोणिनि पवौ दोषास्त्वकिंचित्कराः ।

अत्रोक्ताना दोषाणामपवादमाह—वर्तुलेत्यादि । एवंभूते वज्रे अकिंचित्करा निष्फला इत्यर्थः । अथ पवेर्गुणानुद्दिशति—

अच्छत्वं लघुता तथाऽष्टफलता षट्कोणता तीक्ष्णताऽ-
प्येतान् पञ्च गुणान् गृणन्ति गुणिनो देवोपभोग्ये पवौ॥३५

उत्तमे पवौ अच्छत्वमादर्शादिवत्, लघुता तुषवत्, अष्टफलता अष्टफलकता, तीक्ष्णता अन्यमणिभेदकता, एते पञ्च गुणाः । अथोपसंहारव्याजेन खानि निरूपयति—

जातिः प्राक्तु निरूपिता जनिरपि प्रोक्ता खनिस्त्वष्टधा
द्वे द्वे तत्र युगे युगे प्रभवतस्तत्रादिमे कोशलः ।
कालिङ्गस्तदनन्तरे निगदितो वङ्गस्तथा मालवः
सौराष्ट्रो मणिपुण्ड्रकस्त्वथ कलौ सोपारवज्राकरौ ३६

आदिमे कृतयुगे, कोशलः कोशलदेशः कालिङ्गदेशश्च, त्रेतायुगे वङ्गदेशः मालवश्च, द्वापरे सौराष्ट्रदेशः मणिपुण्ड्रकपर्वतश्च, कलौ तु सोपारदेशः वज्राकरो वैरागरश्च 'वैरागड' इति भाषा । अथ मौल्यज्ञानार्थं मानपरिभाषामाह—

चत्वारः सितसर्षपाः पनसिका, ते द्वे पुनस्तन्दुल-
स्ताभ्यामेव यवो, [१]यवः पुनरयं पिण्डोऽस्ति किंचित्पृथुः ।
पिण्डो गात्रमिति द्विधा पविवपुः संज्ञाऽस्य संज्ञामिमा
ज्ञात्वा [२]मानमिदं च तोलनिकया संतोल्य मौल्यं वदेत् ॥३७

---

१ 'यव पुनरिति पिण्डशब्द स्थौल्यवाचक, अय वशायववत्स्थूल, अधिको वा किंचित्' इति रसपद्धतिटीकाया महादेव । २ 'मानकदण्डतो बत महन्मध्याल्पमौल्य वदेत्' इति रसपद्धत्या पाठ ।

तन्मौल्यं विचार्य वाच्यमित्याह—

मौल्य न[1] प्रतिदेशमस्ति सदृशं येनेदमित्थं मया
वाच्यं तच्च तथाऽपि गद्यत इह त्रैराशिकक्रान्तये[2] ॥ ३८ ॥

यथा—

पिण्डस्तु त्रिविधो लघुः समगुरू तत्रोत्तमं लाघवं
साम्ये मध्यममल्पमेव गदितं मौल्यं गुरुत्वे बुधैः ।
त्रेधा लाघवतस्त्रिधा गुरुतया षोढा च सामान्यतो
मूल्यं द्वादशधेदृशं खलु मतं तत्तारतम्यं क्रमात् ॥३९॥

पिण्डस्तण्डुलसमितो यवपृथुः संभावयित्वा[3] पुन-
र्वज्रं तेन समं विचार्य चतुरो मौल्यं ततो निर्दिशेत् ।
तच्चेत्तत्क्रमतन्निवृत्तिकगुणैर्युक्तश्चतुर्भिः पवि-
र्निष्कं तन्दुलसंमितो यवपृथुः प्राप्नोति मौल्यं यदि ४०

पिण्डो यस्य यवद्वयेन सदृशो माने पुनस्तण्डुलो
मौल्यं तस्य पवेश्चतुर्गुणमुदाहर्तव्यमेवं पुनः ।
पिण्डश्चेत्त्रिचतुः[4]शरर्तुयवभः स्यादष्टदिक्षोडश-
द्विर्द्विर्वर्धितमस्य तन्दुलमितेर्वज्रस्य मौल्यं तथा ॥ ४१ ॥

यो वृद्धत्वे तु यवोपमः प्रकृतितस्तत्पादतो मानवा-
नष्टाविंशतिवर्धितं प्रथमतः प्राप्नोति मौल्यं मणिः ।
पिण्डे सप्तयवोपमः परिमितौ स्यात्तण्डुलैकक्रमो
वज्रो वारितरो लभेत परमं मौल्यं सहस्रद्वयम् ॥४२॥

स्याच्चेत्साङ्घ्रियवोपमः पविरथो माने गुरुस्तण्डुलः
क्षीयेतास्य मणेरथ द्विगुणितं मौल्यं क्षयेऽयं क्रमः ।
इत्थं युक्तिबलाद्विचार्य चतुरो मौल्यं मणेरादिशे-
दर्घस्यासति वज्रवर्ष्मणि यथा[5] दोषे क्षयं कल्पयेत् ॥४३॥

---

१ 'तु' ग । २ 'त्रैराशिक क्रान्तये' ग । ३ 'सभाव्य चित्ते' ग ।
४ '°चतुस्तदूध्वयवभा' ग । ५ 'यथादोष' ग ।

याvत्स्याद्गुणिनस्ततस्त्वगुणिनो वृद्धेश्चतस्रः कला-
श्छेत्तव्याः कुशलेन देशसमयद्रव्यात्मविज्ञानिना ॥४४॥

अथ मौल्यप्रयोक्तुर्गुणानाह—

कर्मज्ञो लघुपाणिरर्थविमुखः शास्त्रप्रवीणो गुणी
निःसंदिग्धमतिर्विदेशविधिविन्मौल्यप्रयोक्ता भवेत् ।
अज्ञानादविचार्य मौल्यमधमः कुर्यान्मणेः कुत्सितं
कुष्ठी सोऽत्र भवेदमुत्र स पुनर्गच्छेन्महारौरवम् ॥४५॥

कर्मज्ञ इत्यादि । लघुपाणिर्येन गृहीत्वा दत्तं गुणाय भवति सः, अर्थविमुखः मध्येऽकापट्यं कृत्वा स्थितो यस्तादृशः, गुणी ऊहापोहविचारचतुरः, निःसंदिग्धमतिः अनेकरत्नग्रहणेन जातमतिः, विदेशविधिवित् देशान्तरस्थभाषामौल्यादिज्ञः । एवं प्रयोक्ता रत्नमौल्यस्य भवेत् । अथैतादृग्चातुर्याभावे प्रयोक्तुर्दोषमाह—अज्ञानादिति । अमुत्र परलोके, महारौरवं नरकम् । अथ मुद्रादौ पविविन्यासप्रकारमाह—

यत्स्यादङ्गममुष्य निम्नमुदितं सद्भिः शिरस्तत्पवे-
र्विस्तीर्णं तु तल ततः स शिरसा योज्योऽङ्गुलीयादिषु ।

व्याख्या—यदमुष्य हीरकस्य निम्नमङ्गं गभीर सद्भिस्तच्छिर उदितं, विस्तीर्णं तु तलमुदितम् । अङ्गुलीयादिषु मुद्रिकादिषु शिरसैव योज्यो न तलेन ।

परीक्षाप्रकारमाह—

वामं वामविलोचनः करतलं विस्तार्य तस्मिन् पविं
तर्जन्या परिचालयेदवहितः प्रायस्तलेन स्थितः ॥ ४६ ॥

अवहितः पण्डितः, वामं करतलं विस्तार्य, तस्मिन् पविं तर्जन्या परिचालयेत् । कीदृशः? वामविलोचनः वक्रदृष्टिः सन्नेव । प्रायस्तलेन नीचत्वेनावस्थितः । किं विचारणीयं तदाह—

जातिर्दोषगुणौ खनिर्गिरिकथे रङ्गापरङ्गौ छवि-
मौल्यं चेति दशप्रकारमशनेर्जानाति यो लक्षणम्।
बाह्याभ्यन्तरतः प्रविष्ट इव स स्याच्छास्त्रतो मण्डली
तेषा संसदमाह चार्यविबुधः श्रीमण्डलीं मण्डली॥४७॥

व्याख्या—कथा इतिहासः, रङ्गः शुक्लादिः, अपरङ्गो नीलादि, छविः कान्तिः, मौल्यं देशदेशीयं, इति दशप्रकारं पवेर्यः लक्षण जानाति स मण्डलीं प्रविशेत्। क इव? पवेर्बाह्याभ्यन्तरतः प्रविष्ट इव। कस्माच्छास्त्रतः। मण्डलीसंज्ञाया अर्थमाह—तेषामिति। तेषा मण्डलिकानां रत्नविदां सभां मण्डलीमाहुः॥

अथ मण्डलीप्रवेशानर्हान् वक्ति—(अथ च मौल्ये कश्चिद्विशेषार्थमाह—)[1]

हीनाङ्गः प्रविशेन्न तां न पतितो नो वाऽन्त्यजो नाबला
भाण्डाद्यैरिह मौल्यमल्पमधिकं प्रोक्तं न दोषाय तत्।
व्युत्क्रम्योत्तममध्यमविपर्यासेन यद्यत्तथा
स्नेहाल्लुब्धतया तु संसदि पुनः कुष्ठी भवेन्मण्डली॥४८

स्पष्टम्। अथैकेन मौल्यविचारणा न कार्येत्याह—

नैको मौल्यविचारणां विरचयेन्नैकः परीक्षेत वा
भ्रान्तेः पूरुषधर्मतस्तु कृतके[2] मुह्यन्ति सुज्ञा मणौ।
शाणक्षारविलेखनेन विनुदेत्संदेहमन्ये पुन-
र्लिख्यन्ते कुलिशेन हन्त कुलिशं केनापि नो लिख्यते ४९

व्याख्या—भ्रमप्रमादादीना पुरुषधर्माणा सत्त्वात्संदेहे शाणक्षारविलेखनेन पविं विलिखेत्। अन्ये तु मणयः कुलिशेन लिख्यन्ते। इति हीरकपरीक्षा॥

---

१ अय पाठ प्रक्षिप्त इति भाति। २ कृतके नाम कृत्रिमे मणौ।

ये ऽष्टौ मौक्तिकभूमयः करिकिरित्वक्सारमत्स्याम्बुमु-
　　कम्बूरोगतिशुक्तयोऽत्र चरमोत्पन्न पुनर्विश्रुतम् ।

करिमौक्तिकलक्ष्माह—

यद्दन्तावलकुम्भसंभवमदः पीतारुणं मन्दरुक्
　　धात्रीदभ्रतयाऽत्र रत्नमधमं काम्बोजकुम्भीन्द्रजम्॥५०॥

अथ किरिर्वराहः, तज्जमौक्तिकलक्ष्माह—

एकाकी शिशुरेव निःस्पृहतया यः काननं गाहते
　　तस्यानादिवराहवंशजनुषः कोलस्य मूर्ध्नि स्थितम् ।
कङ्कोलाकृतिमिन्दुकुन्दधवलं दैवादवाप्नोति चे-
　　न्मुक्ता यः समुपास्यते स निधिभिर्मर्त्यो धनाधीशवत्॥

अथ त्वक्सारो वंशः, तज्जमौक्तिकलक्ष्माह—

मुक्ताः सन्ति कुलाचलेषु करकाकान्तिद्रुहो वंशजाः
　　कर्कन्धूफलबन्धवो निदधते कण्ठेषु सिद्धाङ्गनाः ।

मत्स्यजमौक्तिकलक्ष्माह—

प्रोष्ठीगर्भभवस्तु मौक्तिकमणिर्गुञ्जासमः पाटली-
　　पुष्पाभः स न लभ्यते भुवि जनैरस्मिन् कलौ पापिनि॥

अथाम्बुमुङ्मेघस्तज्जमौक्तिकलक्ष्माह—

यन्मेघोदरसंभवं तदवनीमप्राप्तमेवामरै-
　　र्व्योमस्थैरपनीयते विनिपतद्वर्षासु मुक्ताफलम् ।
तिग्मांशोरपि दुर्निरीक्ष्यमकृशं सौदामिनीसंनिभं
　　देवानामपि दुर्लभं न मनुजाः स्युस्तस्य पात्रं पुनः ५३

अथ कम्बुः क्षुद्रशङ्खः, तज्जमौक्तिकलक्ष्माह—

शङ्खस्य श्रुतिहारिणो जलनिधौ ये वंशजाः कम्बव-
　　स्तेष्वन्तः किल मौक्तिक भवति यत्तच्छुक्रतारानिभम् ।
कापोताण्डसमं सुवृत्तमकृशश्रीकं सुरूपं लघु
　　स्निग्धं स्पर्शपवित्रमत्र न पुनर्मर्त्यैस्तदासाद्यते ॥ ५४ ॥

---

१ 'धात्रीदभ्रमथान्यरत्न°' ग ।

अथ उरोगतिः सर्पः, तज्जमौक्तिकलक्ष्माह—

शेषस्यान्वयिना फणासु फणिना यन्मौक्तिकं जायते
वृत्तं निर्मलमुज्वलं शशिरुचि श्यामच्छवि श्रीकरम्।

श्यामच्छवि श्यामाभास, तत्फलमाह—

कङ्कोलाकृति कोटिकोटिसुकृतैः प्राप्नोति चेन्मानवः
सः स्याद्वाजिगजाधिपो नृपसमो जातोऽपि नीचे कुले॥
आस्ते सद्मनि चेत्स पन्नगमणिस्तं यातुधानामरा
हर्तुं रन्ध्रमवेक्षते इंतरतः[1] कुर्यान्महाशान्तिकम्।

अथ शुक्तिजमौक्तिकलक्ष्माह—

वज्राघातविघट्टिताद्बलमुखाद्भ्रष्टाः पुनर्ये द्विजाः
क्षारोदन्वति यत्र यत्र पतितास्ते ते भवन्नाकराः॥५६॥
आदायः पृथुबर्बरो जलनिधौ स्यादारवाटस्ततो[2]
नाम्ना सिहलकोर्मिजौ तदुपरि स्यात्पारसीकोऽपरः।
अत्रोदन्वति शुक्तिजीवजठरक्रोडैककोणस्थिताः
स्वातीशम्बरबिन्दव[3] परिणमन्त्यक्लिन्नमुक्तातया॥५७॥
सुस्निग्धं मधुवर्णमुत्तमरुचि स्यात्सिहले मौक्तिकं
स्निग्धं पीतरुगिन्दुबिम्बरुचिरं स्यादारवा(ला)टोद्भवम्।
श्वेतं[4] स्निग्धमतीव बन्धुरतरं स्यात्पारसीकोद्भवं
रूक्ष किंचन वर्णसंकरयुतं स्याद्बार्बर मौक्तिकम्॥५८॥
शोणं तूर्मिजसंभवं विदुरतिस्निग्ध तथाऽऽदायजं
चातुर्वर्ण्ययुत सुलक्षणमतिश्लक्ष्णं कविश्रीधरम्।

कविः शुक्रः॥

षट्स्वेतेष्वपि रुक्मिणीव जगति ख्याति गता रुक्मिणी
नाम्ना शुक्तिरनीदृगुत्तमगुणा सिन्धौ समुज्जृम्भते॥५९॥

---

१ 'तदितर' ग। २ 'स्यादारलाटस्ततो' ग। ३ शम्बर नाम जलम्। ४ 'स्वछ' ग।

तस्या गर्भभवं तु कुङ्कुमनिभं सर्वासु जातिष्वपि
श्रेष्ठं भूरिगुण वदन्ति कृतिनः श्रेयस्करं तद्भवेत् ।
स्वच्छ ह्लादि लघूदकद्युतियुतं मुक्ताफलं किंचन
स्थूलं स्निग्धमतीव निर्मलमिलाभूमौ प्रकाशं सदा ॥६०॥
आम्नायोदितमस्य मौल्यमवनौ तालद्वयीजन्मको
राशिर्हेमकृतः कृतस्तदधम वा मध्यमं जायते ।
दोषान् पञ्च लघून्, गुरूंश्च चतुरः, षट् चैव दोषेतरान्
छायास्त्रित्वमिता गृणन्ति सुधियो मुक्तामणौ ते पुनः ॥
दीर्घं पार्श्वकृशं त्रिवृत्तमपि च त्र्यस्रं ततः कापिलं
पञ्चैते खलु मौक्तिकेषु गदिता दोषास्तु साधारणाः ।
नाम्नैवोदितलक्षणाः पुनरमी विच्छिन्निरुद्योगिता[1]-
दौर्भाग्यप्रसुताविनाशलघुताकौलीनताकारिणः ॥६२॥
शुक्तिस्पर्शनमत्स्यनेत्रजठराकारातिरक्ताङ्कताः
श्वित्रक्रोश(?)दरिद्रतामृतिकरा दोषा बृहन्तस्त्वमी ।
तेष्वन्त्यौ विशदौ स्वशुक्तिसदृशस्त्वाद्यो द्वितीयस्ततो
मत्स्याक्षच्छविलाञ्छनः पुनरमी शस्ता न मुक्ताफले६३
दीप्तिर्गौरववृत्तताविमलतासुस्निग्धताकान्तताः
स्युः षट् शुक्तिमणौ गुणा इति गुणैर्युक्तं पुनर्मौक्तिकम् ।
यः कण्ठे बिभृयात्समस्तजनुषामह्नः समाप्तिं नये-
च्छायास्तु त्रिविधा स्मृता मधुसिताश्रीखण्डखण्डश्रियः॥
वृत्तस्थूलगुरूरुरुक्छुचि शुभं नीवी तु तत्प्राप्नुया-
त्सत्य[2] त्वत्र तुलामुशन्ति कवयो जातिस्पृशं मौक्तिकम् ।
गुञ्जा द्वित्रियवाद्भवेदिह पुनर्माषश्चतुर्भिश्च तैः
शाणः शाणयुगात्कलञ्ज उदगान्निष्कस्तदेकादशात् ६५
इति मुक्तोत्पत्तिलक्षणानि ॥

१ 'विच्छिनरुग्योगिता°' ग । २ '°त्रास' ग ।

अथ रसरत्नसमुच्चयोक्तानि सर्वेषा लक्षणानि गुणाश्च लिख्यन्ते। वज्रस्य—

वज्रं च षड्रसोपेतं सर्वरोगापहारकम्।
सर्वाघशमन सौख्यं देहदार्ढ्य रसायनम्॥ ६६॥
भस्माङ्कं काकपादं च रेखाक्रान्तं तु वर्तुलम्।
आधारं मलिनं बिन्दुसंत्रासि स्फुटितं तथा।
नीलाभं चिपिटं रूक्ष तद्वज्रं दोषलं त्यजेत्॥ ६७॥

यत्पाषाणतले निकाषनिकरे नोद्धृष्यते निष्ठुरै-
र्यच्चान्योपललोहमुद्गरमुखैर्लेखं न यात्याहतम्।
यच्चान्यान्निजलीलयैव दलयेद्वज्रेण वा भिद्यते
तज्जात्य कुलिशं वदन्ति कुशलाः स्थाप्यं महार्घ च तत् ६८

अष्टास्रं चाष्टफलकं षट्कोणमतिभासुरम्।
अम्बुदेन्द्रधनुर्वारितरं पुंवज्रमुच्यते।
पुंस्त्रीनपुंसकं वज्रं योज्यं पुंस्त्रीनपुंसके॥ ६९॥
आयुःप्रद झटिति सद्गुणदं च वृष्यं
दोषत्रयप्रशमनं सकलामयघ्नम्।
सूतेन्द्रबन्धरससद्गुणकात्स्र्यदायि
मृत्युञ्जयं तदमृतोपममेव वज्रम्॥ ७०॥

अन्यत्रापि—

वज्र समीरकफपित्तगदान्निहन्या-
द्वज्रोपमं च कुरुते वपुरुत्तमश्रि।
शोषक्षयभ्रमभगन्दरमेहमेदो-
पाण्डूदरश्वयथुहारि च षड्रसाढ्यम्॥ ७१॥
अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा।
पाण्डुं तापं गुरुत्वं च तस्मात्संशोध्य मारयेत्॥ ७२॥

आयुः पुष्टि बल वीर्य वर्ण सौख्यं करोति च ।
सेवितं सर्वरोगघ्नं मृतं वज्रं न संशयः ॥ ७३ ॥

अथ वज्रशोधनम्—

व्याघ्रीकन्दगत वज्रं दोलायन्त्रेण पाचयेत् ।
सप्ताहं कोद्रवक्काथे कुलिशं विमलं भवेत् ॥ ७४ ॥

अन्यत्र दिनान्यप्युक्तानि—

कुलत्थकोद्रवक्काथे दोलायन्त्रे विपाचयेत् ।
व्याघ्रीकन्दगतं वज्रं त्रिदिनं तद्विशुध्यति ॥ ७५ ॥

व्याघ्री कण्टकारिका । प्रकारान्तरम्—

व्याघ्रीकन्दगतं वज्रं मृदा लिप्तं पुटे पचेत् ।
अहोरात्रात्समुद्धृत्य हयमूत्रेण सेचयेत् ।
वज्रीक्षीरेण वा सिञ्चेत्कुलिशं विमलं भवेत् ॥ ७६ ॥

प्रकारान्तरम्—

गृहीत्वा हि शुभे वज्रं व्याघ्रीकन्दे विनिक्षिपेत् ।
महिषीविष्ठया लिप्त्वा करीषाग्नौ विपाचयेत् ॥ ७७ ॥
त्रियामं वा चतुर्यामं यामिन्यन्तेऽश्वमूत्रके ।
सेचयेत्पाचयेदेवं सप्तरात्रेण शुध्यति ॥ ७८ ॥

अथ वज्रमारणम्—

त्रिवर्षारूढकार्पासमूलमादाय पेषयेत् ।
त्रिवर्षनागवल्ल्या वा निजद्रावैः प्रपेषयेत् ॥ ७९ ॥
तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत् ।
एव सप्तपुटैर्नूनं कुलिशं मृतिमाप्नुयात् ॥ ८० ॥

इति वज्रभस्म । अथान्यः प्रकारः—

त्रिसप्तकृत्वः संतप्तं खरमूत्रेण सेचितम् ।
मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥ ८१ ॥

प्रध्मातं वाजिमूत्रेण सिक्त पूर्वक्रमेण वै।
भस्मीभवति तद्वज्रं शङ्खशीतांशुसुन्दरम् ॥ ८२ ॥

इति वज्रभस्म। अथान्यः प्रकारः—

कांस्यपात्रस्थभेकस्य मूत्रे वज्र समावपेत्।
त्रिसप्तकृत्वः संतप्तं वज्रमेवं मृतं भवेत् ॥ ८३ ॥

इति वज्रभस्म। कांस्यपात्रस्थभेकस्येत्यस्य व्याख्या—कांस्यस्य उत्ताना कटोरिका, तत्रस्थो भेको मण्डूकः, अङ्गुल्यादिना धर्षितः, पात्रस्य चिक्कणतया बहिर्गन्तुमशक्तो भीतः सन्मूत्रं सृजति। इति मूत्रग्रहणार्थमयं यत्न इति भावः॥

अन्यः प्रकारः—

मेषशृङ्गं भुजङ्गास्थि कूर्मपृष्ठाम्लवेतसम्।
शशदन्तं सम पिष्ट्वा वज्रीक्षीरेण गोलकम् ॥ ८४ ॥
कृत्वा तन्मध्यगं वज्रं म्रियते ध्मातमेव हि।

इति वज्रभस्म। अथान्यः सुगमः प्रकारः—

हिङ्गुसैन्धवसंयुक्ते क्षिपेत्क्वाथे कुलत्थजे।
तप्तं तप्तं पुनर्वज्रं भवेद्भस्म त्रिसप्तधा ॥ ८५ ॥

इति वज्रभस्म।

## अथ विद्रुमलक्षणगुणाः।

पक्वबिम्बीफलच्छायं वृत्तायतमवक्रकम्।
स्निग्धमव्रणकं स्थूल प्रवाल सप्तधा शुभम् ॥ ८६ ॥
आगाररञ्जनाक्रान्तं वक्रं सूक्ष्मं सकोटरम्।
रूक्षं कृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत् ॥ ८७ ॥
बालार्ककिरणारक्ता सागरसलिलोद्भवा लता याऽस्ति।
न त्यजति निजरुचि निकषे घृष्टाऽपि सा स्मृता जात्या ॥ ८८ ॥
प्रवाल मधुर साम्लं कफपित्तादिदोषनुत्।
वीर्यकान्तिकर स्त्रीणा धृते मङ्गलदायकम् ॥ ८९ ॥

क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु ।
विषभूतादिशमनं विद्रुमं नेत्ररोगहृत् ॥ ९० ॥

अथ मौक्तिकम्—

ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं महत् ।
ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवधा शुभम् ॥ ९१ ॥

नक्षत्राभं वृत्तमत्यन्तमुक्तं स्निग्धं स्थूलं निर्मलं निर्व्रणं च ।
न्यस्तं धत्ते गौरवं यत्तुलाया तन्निर्मौल्यं मौक्तिकं सौख्यदायि॥

यद्विच्छायं मौक्तिकं व्यङ्गकायं
शुक्तिस्पर्शं रक्तता[1] चाति धत्ते ।
मत्स्याक्षीकं रूक्षमुत्तानंनिम्नं
नैतद्धार्यं धीमताऽसौख्यदायि ॥ ९३ ॥

लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् ।
मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम्॥९४॥

मौक्तिकं सुमधुरं सुशीतलं दृष्टिरोगशमनं विषापहम् ।
राजयक्ष्मपरिकोपनाशनं क्षीणवीर्यबलपुष्टिवर्धनम् ॥ ९५ ॥

कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यनुत् ।
पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम् ॥ ९६ ॥

**अथ माणिक्यं पद्मराग इति च ।**

माणिक्यं मधुरं स्निग्धं वातपित्तविनाशनम् ।
रत्नप्रयोगप्रज्ञानां रसायनकरं परम् ॥ ९७ ॥
स्निग्धं सुगात्ररचितं दीप्तं स्वच्छं सुरङ्गं च ।
तज्जात्यं माणिक्यं कल्याणं धारणात्कुरुते ॥ ९८ ॥
यद्विच्छायं शर्करिलं कर्कशधूम्रं स्वरागविकलं च ।
विरूपलघु माणिक्यं न धार्यं दोषावहं त्याज्यम्॥९९॥

---

1 'कृष्णता' ग ।

कुशेशयदलच्छायं स्वच्छ स्निग्धं महत्स्फुटम्।
वृत्तायतं समं गात्रं माणिक्यं त्वष्टधा शुभम्॥ १००॥
माणिक्यं दीपनं वृष्य कफवातक्षयार्तिनुत्।
भूतवेतालपापघ्नं कर्मजव्याधिनाशनम्॥ १०१॥

अथ गारुत्मतम्।

मरकतं हि विषघ्नं शीतलं मधुरं रसे।
अम्लपित्तहरं रुच्यं पुष्टिद भूतनाशनम्॥ १०२॥
स्वच्छ च गुरु सुच्छायं स्निग्धं गात्रं च मार्दवम्।
अव्यङ्गं बहुरङ्गं च शुभ मरकतं मतम्॥ १०३॥
शर्करिलं रूक्षमलिन लघु हीनकान्तिकल्माषम्।
त्रासयुतं विकृताङ्गं मरकतममरोऽपि नोपभुञ्जीत॥१०४
यच्छैवालशिखण्डिशाद्वलहरित्काचैश्च[1] काकच्छदैः
खद्योतेन च बालकीरवपुषा शैरीषपुष्पेण च।
छायाभिः सततं दधाति तदिदं निर्दिष्टमष्टात्मकं
जात्यं यत्तपनातपैश्च परितो गारुत्मतं रञ्जयेत्॥१०५॥

अथ वैडूर्यम्।

वैडूर्यमुष्णमम्लं च कफमारुतनाशनम्।
गुल्मादिदोषशमन भूमिजं च शुभावहम्॥ १०६॥
एकं वेणुपलाशपेशलरुचा मायूरकण्ठत्विषा
मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा छायया।
यद्गात्रं गुरुतां दधाति नितरां[2] स्निग्धं तु दोषोज्झितं
वैडूर्यं विदलं वदन्ति सुधियः स्वच्छं च तच्छोभनम्॥
विच्छायं मृच्छिलागर्भं लघु रूक्षं त्वसत्कृतम्।
सत्रासं चिपिटं कृष्णं वैडूर्यं दूरतस्त्यजेत्॥ १०८॥

---

१ "°हरित्काचैश्च' ग। २ 'नितरा' ग।

वैडूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम् ।
भ्रमच्छुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ॥ १०९ ॥
घृष्टं यदात्मना स्वच्छं स्वच्छायां निकषात्मनि ।
स्फुटं प्रदर्शयेदेतद्वैडूर्यं जात्यमुच्यते ॥ ११० ॥
वैडूर्यं रक्तपित्तघ्नं प्रजायुर्बलवर्धनम् ।
पित्तप्रधानरोगघ्नं दीपन वृष्यमेव च ॥ १११ ॥

## अथ गोमेदम् ।

सुस्वच्छगोजलच्छायं स्निग्धं स्वच्छं समं गुरु ।
निर्दलं मसृणं दीप्तं गोमेदं शुभमष्टधा ॥ ११२ ॥
गोमेदकोऽम्ल उष्णश्च वातकोपविकारजित् ।
दीपनः पाचनश्चैव धृतोऽयं पापनाशनः ॥ ११३ ॥
पात्रे यत्र न्यस्ते पयः प्रयात्येव गोजलोज्वलितम् ।
घर्षेऽप्यहीनकान्ति गोमेदं तं बुधा विदुर्जात्यम् ॥ ११४ ॥
गोमेदं कफपित्तघ्नं क्षयपाण्डुक्षयंकरम् ।
दीपनं पाचनं रुच्यं त्वच्यं बुद्धिप्रबोधनम् ॥ ११५ ॥
विच्छायं लघु रूक्षाङ्गं चिपिट पटलाचितम् ।
निष्प्रभं पीतकाचाभं गोमेदं न शुभावहम् ॥ ११६ ॥

## अथेन्द्रनीलम् ।

एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम् ।
मृदुर्मध्ये लसज्ज्योतिः सप्तधा नीलमुत्तमम् ॥ ११७ ॥
श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम् ।
विषमज्वरदुर्नामपापघ्नं नीलमीरितम् ॥ ११८ ॥
नीलकस्तिक्तकः श्रेष्ठः कफपित्तानिलापहः ।
यो दधाति शरीरस्य शौरिर्मङ्गलदो भवेत् ॥ ११९ ॥
न स्निग्धो निर्मलो गात्रे मसृणो गुरुदीप्तिकः ।
तृणग्राही मृदुर्नीलो दुर्लभो लक्षणान्वितः ॥ १२० ॥

सितशोणपीतकृष्णाश्छाया नीले क्रमादिमाः कथिताः ।
विप्रादिवर्णसिद्ध्यै धारणमस्यापि वज्रवत्फलवत् ॥ १२१ ॥
अस्त्यानचन्द्रिकास्यन्दसुन्दरीक्षीरपूरितम् ।
यत्पात्रं रञ्जयत्याशु स जात्यो नील उच्यते ॥ १२२ ॥

अथ पुष्परागम् ।

सच्छायपीतगुरुगात्रसुरङ्गशुद्धं
स्निग्धं च निर्मलमतीव सुवृत्तशीतम् ।
यत्पुष्परागममलं क्षयनाशकारि
पुष्णाति कीर्तिमतिशौर्यसुखायुरर्थान् ॥ १२३ ॥
कृष्णबिन्द्वङ्कितं त्र्यक्ष धवलं मलिनं लघु ।
विच्छायं शर्कराङ्काभं पुष्परागं सदोषकम् ॥ १२४ ॥
घृष्टो निकषपदे यत्पुष्यति यो रागमधिकमात्मीयम् ।
एष खलु पुष्परागो जात्यस्तथाऽयं परीक्षकैरुक्तः ॥१२५॥
पुष्परागं गुरु स्निग्धं स्वच्छं स्थूलं समं मृदु ।
कर्णिकारप्रसूनाभं मसृणं शुभमष्टधा ॥ १२६ ॥
पुष्परागं विषच्छर्दिकफवाताग्निमान्द्यनुत् ।
कुष्ठार्शोदाहशमनं दीपनं लघु पाचनम् ॥ १२७ ॥

अथ सर्वेषां समुच्चितं लक्ष्म—

श्यामः स्यादिन्द्रनीलस्त्वतिमसृणतनुश्चाथ गारुत्मतः स्या-
न्नीलच्छायोऽतिदीप्तोऽप्यथ मिहिरमणि सूर्यतप्तोऽग्निमुक्स्यात् ।
चन्द्रांशुस्पर्शतोऽम्भः स्रवति शशिमणिः पुष्परागस्तु पुष्प-
प्रख्यः श्रीवज्रमुच्चैर्घनसमभिहतं संविशेल्लोहपिण्डे ॥ १२८ ॥
वैडूर्यं यद्बिडालेक्षणरुचि गदितं स्याच्च गोमेदरत्नं
गोमूत्राभं विधूमज्वलदनलनिभं पद्मरागं वदन्ति ।
मुक्ताशङ्खप्रवालं सरिदधिपतिजं विश्वविख्यातमेत-
द्राजावर्तं तु पीतारुणमृदुसुरभिक्षोणिभागोत्थमाहुः१२९

अथ पञ्चरत्नानि—

पुष्पराग महानीलं पद्मराग सवज्रकम् ।
मरक्त चेति संप्रोक्ताः पञ्च रत्नवराः शुभाः ॥ १३० ॥

अथ मणयः—

वैक्रान्तः सूर्यकान्तश्च हीरकं मौक्तिकं मणिः ।
चन्द्रकान्तस्तथा चैव राजावर्तश्च सप्तमः ॥
गरुडोद्गारकश्चैव ज्ञातव्या मणयो ह्यमी ॥ १३१ ॥

पूर्वोक्ताश्च । अथ वज्रव्यतिरिक्ताना मणीनामुत्पत्तिः—

गोमेदताक्ष्यवायजदेवेज्यमणीन्दुतरणिकान्ताद्याः ।
नानावर्णगुणाढ्या विज्ञेयाः स्फटिकजातयः प्राज्ञैः ॥१३२॥

वायज वैडूर्य, देवेज्यः पुष्परागः, शेषं स्पष्टम् । अथ स्फटिकः—

स्फटिकं सितोपलं स्यादमलमणिर्निर्मलोपल स्वच्छम् ।
स्वच्छमणिरमलरत्न निस्तुषरत्नं शिखिप्रियं नवधा ॥१३३॥
स्फटिकः समवीर्यः स्यात् पित्तदाहार्तिशोषनुत् ।
तस्याक्षमाला जपता दत्ते कोटिगुणं फलम् ॥ १३४ ॥
यद्गङ्गातोयबिन्दुच्छवि विमलतम निस्तुष नेत्रहृद्य
स्निग्धं शुद्धान्तराल मधुरमतिहिमं पित्तदाहास्रहारि ।
पाषाणैर्यन्निघृष्ट स्फुटितमपि निजा स्वच्छता नैव जह्या-
त्तज्जात्यं जात्वलभ्यं शुभमुपतनुते शैवरत्न विचित्रम् ॥

अथ भवति सूर्यकान्तस्तपनमणिस्तपनश्च रविकान्तः ।
दीप्तोपलोऽग्निगर्भो ज्वलनाश्माऽर्कोपलश्च वसुनामा ॥ १३६ ॥

रविकान्तो भवेदुष्णो निर्मलश्च रसायनः ।
वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः ॥ १३७ ॥
शुद्धः स्निग्धो निर्व्रणो निस्तुषोऽन्त-
र्यो निर्घृष्टोऽत्यन्तनैर्मल्यमेति ।

यः सूर्यांशुस्पर्शनिस्यूतवह्नि-
जात्यः सोऽय कथ्यते सूर्यकान्तः ॥ १३८ ॥

इन्दुकान्तश्चन्द्रकान्तश्चन्द्राश्मा चन्द्रजोपलः ।
शीतात्मा चन्द्रिकाद्रावः शशिकान्तश्च सप्तधा ॥ १३९ ॥

चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रतापनुत् ।
शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविनाशनः ॥ १४० ॥

स्निग्धं शीत पीतमत्रासमन्त-
धत्ते चित्ते स्वच्छता यन्मुनीनाम् ।
यश्च स्रावं याति चन्द्रांशुसङ्गा-
ज्जात्य रत्न चन्द्रकान्ताख्यमेतत् ॥ १४१ ॥

राजावर्तो नृपावर्तो राजन्यावर्तकस्तथा ।
आवर्तमणिरावर्तः स्यादित्येष शराह्वयः ॥ १४२ ॥

राजावर्तः कटुः स्निग्धः शिशिरः पित्तनाशनः ।
सौभाग्यं कुरुते नृणा भूषणेषु प्रयोजितः ॥ १४३ ॥

निर्गारमसितमसृण नील गुरु निर्मल बहुच्छायम् ।
शिखिकण्ठसमं सौम्यं राजावर्त वदन्ति जात्यमणिम् ॥१४४॥

पेरोजं हरिताश्मा च भस्माङ्गं हरितं द्विधा ।
पिरोज सुकषाय स्यान्मधुर दीपन सरम् ॥ १४५ ॥

स्थावर जङ्गमं चैव संयोगाच्चापि यद्विषम् ।
तत्सर्व नाशयेच्छीघ्र मूलभूतादिदोषजम् ॥ १४६॥ इति ॥

अथाशेषरत्नाना शोधनमारण, उक्तं च—

रत्नोपरत्नान्येतानि शोधनीयानि यत्नतः ।
अशुद्धानि न कुर्वन्ति गुणान् रोगांस्तु तन्वते ॥ १४७ ॥

पुष्परागं च संधानैः कुलत्थक्वाथसंयुतैः ।
तन्दुलीयजलैर्वज्रं नील नीलीरसेन च ॥ १४९ ॥
रोचनाद्भिश्च गोमेद वैडूर्य त्रिफलाजलैः ।
धृतान्येतेषु संखिन्नान्याशु शुध्यन्ति दोलया ॥ १५० ॥
लकुचद्रावसंपिष्टैः शिलातालकगन्धकैः ।
वज्रं विनाऽन्यरत्नानि म्रियन्तेऽष्टपुटैः खलु ॥ १५१ ॥

इति सर्वरत्नभस्मीकरणम् । अत्र कश्चिद्विशेषः—

रत्नादीनामलाभे तु ग्राह्य तस्योपरत्नकम् ।
मौक्तिकस्याऽप्यभावे तु मुक्ताशुक्ति प्रयोजयेत् ॥ १५२ ॥

अत्र गुरुचरणाः—

न हन्याद्धीरकादीनि नवरत्नानि बुद्धिमान् ।
महामौल्यानि तेषा तु वधे रौरवमृच्छति ॥ १५३ ॥

तर्हि ऋषिभिः कथं हननक्रियोक्तेति सदेहनिवृत्त्यर्थं परंपरोपदेशप्राप्त बीजमस्ति, तद्यथा—

वज्रादीना तु सस्कारे क्रियमाणे पतन्ति ये ।
गात्रेभ्यः खण्डकाः स्वल्पास्तान् हन्याद्बुद्धिमान् भिषक् ॥
यद्वा तत्खनिजाता ये तज्जातीयाः सुलक्षणाः ।
स्वल्पमूल्यास्तु तेषा हि वधे नास्तीह पातकम् ॥ इति १५५

अन्यच्च—

गुणा यथैव रत्नानामुपरत्नेषु ते तथा ।
तेषु किंचित्ततो हीना विशेषोऽयमुदाहृतः ॥ १५६ ॥

**अथोपरत्नेषु वैक्रान्तोत्पत्तिनामगुणशोधनमारणानि ।**

देव्या हते महादैत्ये महिषासुरसज्ञके ।
तद्देहरुधिरोद्भूता बिन्दवो यत्र यत्र हि ॥ १५७ ॥
पतिता विन्ध्यकाद्रेस्तु दक्षिणोत्तरतो रणे ।
वज्राकारास्तु ते जाता वैक्रान्ता इति विश्रुताः ॥ १५८ ॥

गौरीमते तु—

विकृता वज्रखण्डा ये वैक्रान्ताख्या भजन्ति ते ।
जातयः शोधनं हिंसा गुणास्तेषां तु वज्रवत् ॥ १५९ ॥

अन्यच्च—

भैरवं गणनाथं च संपूज्य बलिपूर्वकम् ।
सुमुहूर्ते ततः कार्यं वैक्रान्तग्रहणं बुधैः ॥ १६० ॥
वैक्रान्तः श्वेतपीतादिभेदेनाष्टप्रकारकः ।
स्वर्णरूप्यादिकरणे स्वस्ववर्णः शुभो मतः ॥ १६१ ॥
वैक्रान्तः कृष्णवर्णो यः षट्कोणो वसुकोणकः ।
मसृणो गुरुतायुक्तो निर्मलः सर्वसिद्धिदः ॥ १६२ ॥

गुणाः—

वैक्रान्तो वज्रसदृशो देहलोहकरो मतः ।
विषघ्नो रसराजस्य ज्वरकुष्ठक्षयप्रणुत् ॥ १६३ ॥

अन्यत्रापि—

वैक्रान्तस्तु त्रिदोषघ्नः षड्रसो देहदार्ढ्यकृत् ।
पाण्डूदरज्वरश्वासकासयक्ष्मप्रमेहनुत् ॥ १६४ ॥
अशुद्धौ वज्रवैक्रान्तौ किलासं दाहसंततिम् ।
पाण्डुरोगं पार्श्वपीडां कुरुतौ तौ विशोधयेत् ॥ १६५ ॥

शोधनमारणे—

वैक्रान्तो वज्रवच्छोध्यो ध्मातः सिक्तोऽश्वमूत्रके ।
वज्रवन्मृतिमापन्नो वज्रस्थाने प्रयोजयेत् ॥ १६६ ॥

प्रकारान्तरम्—

कुलित्थक्काथसंस्विन्नो वैक्रान्तः परिशुध्यति ।
म्रियतेऽष्टपुटैर्गन्धनिम्बूकद्रवसंयुतः ॥ १६७ ॥

इति वैक्रान्तभस्म । सत्त्वप्रकारस्तु—

सत्त्वपातनयोगेन मर्दितश्च वटीकृतः ।
मूषास्थो घटिका॰मातो वैक्रान्तः सत्त्वमुत्सृजेत् ॥ १६८ ॥

इति वैक्रान्तसत्त्वम् । अथान्यः प्रकारः—

वैक्रान्ताना पल चैक कर्षैकं टङ्कणस्य च ।
रविक्षीरैर्दिन भाव्य मर्द्य शिग्रुद्रवैर्दिनम् ॥ १६९॥
गुञ्जापिण्याकवह्नीनां प्रतिकर्षाणि योजयेत् ।
एतेन गुटिका कृत्वा कोष्ठीयन्त्रे धमेद्दृढम् ॥
शङ्खकुन्देन्दुसंकाशं सत्त्व वैक्रान्तजं भवेत् ॥ १७० ॥

इति वैक्रान्तसत्त्वम् । अन्येषा तूपरत्नाना शोधनमारणविधि श्चिन्त्यः ।

गुणास्तु—

रत्नानि सोपरत्नानि चक्षुष्याणि सराणि च ।
ग्रहालक्ष्मीविषक्षैण्यपापसतापजिन्ति च ॥ १७१ ॥

भक्षितानि तु—

यक्ष्मपाण्डुप्रमेहार्शःकासश्वासभगन्दरान् ।
ज्वरवीसर्पकुष्ठार्तिशूलकृच्छ्रव्रणामयान् ।
घ्नन्ति पुण्ययशःकृन्ति पुण्यानि च नृणा भृशम् ॥ १७२ ॥

अथ नवग्रहसानुकूल्यार्थ नवरत्नजटितमुद्रा धार्या । तस्या नवरत्नविन्यासप्रकारमाह—

दिक्प्राची कुलिशस्य, मौक्तिकमणेराग्नेयिका, दक्षिणा
दिग्वल्लीप्रभवस्य, नैर्ऋतककुप् गोमेदसो, वारुणी ।
नीलाशोरथ, दिक् विदूरजमणेर्वायोः, कुबेरस्य दिक्
पुष्पस्याथ हरिन्मणेर्हरहरिच्छेषस्य शेषा हरित् ॥ १७३ ॥

कुलिशं वज्र, वल्लीप्रभवं प्रवालं, नीलाशुरिन्द्रनीलः, विदूरजं वैडूर्य, पुष्पः पुष्परागः, हरिन्मणिः गरुडोद्गारः, हरहरित्

ऐशानी, शेषस्य माणिक्यस्य, शेषा मध्या दिक्, कर्णिकायां न्यसेदित्यर्थः। अथाशक्तस्य ग्रहप्रातिकूल्ये धारणदाने आह—

माणिक्यं द्युमणेर्बुधस्य गरुडोद्गारो गुरोः पुष्पकं
गोमेद तमसः प्रवालमवनीसूनोर्विधोर्मौक्तिकम्।
नीलं मन्दगतेः कवेस्तु कुलिश केतोर्बिडालाक्षक
रत्नं रत्नविदो वदन्ति विहितं दानेऽथवा धारणे॥१७४

द्युमणेः सूर्यस्य, तमसः राहोः, अवनीसूनोर्मङ्गलस्य, मन्दगतेः शनैश्चरस्य, कवेः शुक्रस्य, बिडालाक्षकं विदूरमणिः, एषा प्रातिकूल्ये यथासंभवं दानं धारणं च कार्यम्। अथ मुक्ताफलाना द्रुतिस्तथाऽन्येषामपि रत्नानां द्रुतिप्रकारमाह—

मुक्ताफलानि सप्ताह वेतसाऽम्लेन भावयेत्।
जम्बीरोदरमध्ये तु धान्यराशौ निधापयेत्॥ १७५॥
पुटपाकेन तच्चूर्ण द्रवते सलिल यथा।
कुरुते योगराजोऽय रत्नाना द्रावण प्रिये॥ १७६॥

इति मुक्तादिरत्नद्रुतयः। अथ सौराष्ट्रीसत्त्वम्—

सिताऽसिता च सौराष्ट्री गोपित्तैर्भावयेत्तु ताम्।
शतवारं प्रयत्नेन मित्रपञ्चकसंयुताम्।
धमनान्मुञ्चते सत्त्व क्रामक[1] कोष्ठयन्त्रके॥ १७७॥

अथ सस्यकसत्त्वम्—

सस्यकं चूर्णितं भाव्यं दिनं शशकशोणितैः।
स्त्रीमूत्रे वाऽथ यामैकं तत्पादाशा निशा क्षिपेत्॥ १७८॥
मर्द्य करञ्जतैलेन यामैकं गोलकं च तत्।
अन्धमूषागत ध्मातं घटिकार्ध दृढाग्निना।
इन्द्रगोपकसंकाशं सत्त्व मुञ्चति शोभनम्॥ १७९॥

इति श्रीसौराष्ट्रदेशोद्भवसारस्वतकुलावतसोपाध्यायश्रीमाधवविरचिते आयुर्वेदप्रकाशे त्रयोदशोऽध्याय॥ १३॥

---

१ 'क्रामके' ग।

## अथ चतुर्दशोऽध्यायः ।

अथ विषोपविषलक्षणजातिगुणसेवापरिहाराध्यायं व्याख्यस्याम ।

अथ विषोत्पत्तिः—

शृणु देवि प्रवक्ष्यामि यत्रोत्पन्नं महाविषम् ।
भेदास्तस्य वरारोहे यत्र तत्र सविस्तरम् ॥ १ ॥
देवदैत्योरगाः सिद्धा अप्सरोयक्षराक्षसाः ।
पिशाचाः किन्नराश्चैव मिलित्वा च वरानने ॥ २ ॥
एकतो बलिराजस्तु ब्रह्माद्याश्च तथैकतः ।
मन्थान मन्दर कृत्वा नागराजेन वेष्टितम् ॥ ३ ॥
क्षीराब्धिमन्थनं तत्र प्रारब्ध सुरसुन्दरि ।
सुधादीनि सुरत्नानि निर्गतानि ततः परम् ॥ ४ ॥
अतीव मन्थनाद्देवि मन्दराघातवेगतः ।
अहिराजश्रमादेव विषज्वाला विनिर्गता ॥ ५ ॥
ततोऽतिघोरा सा ज्वाला निमग्ना क्षीरसागरे ।
(तथा तत्रैव चोत्पन्नं कालकूटं महाविषम् ।
प्रलयानलसंकाश क्रुद्धः काल इवोत्कटम् ॥)
ता दृष्ट्वा विबुधाः सर्वे दानवाश्च महाबलाः ॥ ६ ॥
विषण्णवदनाः सद्यः प्राप्ताश्चैव मदन्तिकम् ।
ततस्तैः प्रार्थ्यमानोऽहमपिबं विषमुत्तमम् ॥ ७ ॥
ततोऽवशिष्टमभवन्मूलरूपेण तद्विषम् ।
पत्ररूपेण कुत्रापि मृत्तिकारूपतः क्वचित् ॥ ८ ॥
कन्दरूपेण कुत्रापि तेषा लक्षणमुच्यते ।
विष तु गरलं क्ष्वेडं कालकूटं च नामत' ।
अष्टादशविधं ज्ञेय विष कन्दभवं बुधैः ॥ ९ ॥
तेष्वष्टौ सौम्यभेदाः स्युर्भक्षणाद्घ्नन्ति मानवम् ।
दशोग्रभेदाः संस्पर्शादाघ्राणाद्वाऽपि मारकाः ॥ १० ॥

यथा—

सक्तुको मुस्तकः कौर्मो दार्वीकः सार्षपस्तथा।
सैकतो वत्सनाभश्च श्वेतशृङ्गी तथैव च॥ ११॥
एतानि भैषज्यकृते विषाण्यष्टौ समाहरेत्।
जराव्याधिहराणि स्युर्विधिना शीलितानि हि॥ १२॥

लक्षणानि—

चित्रमुत्पलकन्दाभं सुपेष्यं सक्तुवद्भवेत्।
सक्तुकं त विजानीयाद्दीर्घवेगं महोत्कटम्॥ १३॥
ह्रस्ववेगं च रोगघ्नं मुस्तकं मुस्तकाकृति।
कूर्माकृति भवेत्कौर्मं दार्वीकं हि फणाकृति॥ १४॥
ज्वरहृत्सार्षपं रोमि सर्षपाभकणान्वितम्।
स्थूलसूक्ष्मकणैर्युक्तः श्वेतपीतैर्विरोमकः॥ १५॥
ज्वरादिसर्वरोगघ्नः कन्दः सैकत उच्यते।
यः कन्दो गोस्तनाकारो न दीर्घः पञ्चमाङ्गुलात्॥ १६॥
न स्थूलो गोस्तनादूर्ध्वं द्विविधो वत्सनाभकः।
आशुकारी लघुस्त्यागी शुक्लः कृष्णोऽन्यथा भवेत्॥१७॥
प्रयोज्यो रोगहरणे जारणाया रसायने।
गोशृङ्गवद्द्विधा शृङ्गी श्वेतः स्याद्बहिरन्तरे॥ १८॥
एतानि सक्तुकादीनि वातरक्ते त्रिदोषके।
मोहोन्मादापस्मृतिषु कुष्ठेषु च नियोजयेत्॥ १९॥

वातरक्ते वातप्रधानरोगे रक्तप्रधानरोगे उभयप्रधानरोगे वा इति तत्त्वार्थः। अथ वर्ज्यानि—

कालकूटस्तथा मेषशृङ्गी दर्दुरकस्तथा।
हालाहलश्च कर्कोटो ग्रन्थिहारिद्रकस्तथा॥ २०॥

---

१ '°द्दीर्घरोग' ग। २ 'सर्षपाभकणाकृति' ग।

रक्तशृङ्गी केसरश्च यमदंष्ट्रा च पण्डितैः ।
त्याज्यानीमानि योगेषु विषाणि दश तत्त्वतः ॥ २१ ॥

लक्षणानि—

देवासुररणे देवैर्हतस्य पृथुमालिनः[1] ।
दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसंनिभः ॥ २२ ॥
निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्तितः ।
सोऽहिच्छत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् ॥ २३ ॥

शृङ्गवेरः पर्वतविशेषः ॥

घनं रूक्षं सुकठिनं भिन्नाञ्जनसमप्रभम् ।
कन्दाकार समाख्यात कालकूट महाविषम् ॥ २४ ॥

लक्षणान्तरम्—

वृत्तः कन्दो भवेच्छुष्को[2] जम्बीरफलवच्च यः ।
तत्कालकूटं जानीयाद्घ्राणमात्रान्मृतिप्रदम् ॥ २५ ॥
मेषशृङ्गाकृतिः कन्दो मेषशृङ्गीति कीर्त्यते ।
दर्दुराकृतिकः कन्दो दर्दुरः कथितस्तु सः ॥ २६ ॥
गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा ।
तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ॥ २७ ॥
असौ हालाहलो ज्ञेयः किष्किन्धाया हिमालये ।
दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥ २८ ॥
अन्तर्नीलो बहिः श्वेतो हालाहल उदाहृतः ।
कर्कोटाभं तु कर्कोटं खर बाह्येऽन्तरे मृदु ॥ २९ ॥
हरिद्राग्रन्थिवद्ग्रन्थिः सः स्यात्कृष्णोऽतिभीषणः ।
मूलाग्रयोस्तु वृत्तः स्यादायतः पीतगर्भकः ॥ ३० ॥
कञ्चुकाढ्यः स्निग्धपर्वो हारिद्रः स तु कन्दकः ।
गोशृङ्गेऽग्रे च निक्षिप्ते नासयाऽसृक्प्रवर्तते ॥ ३१ ॥

---

१ 'वृषुमालिन ' ग । २ 'भवेत्कृष्णो' ग ।

कन्दो लघुर्गोस्तनवद्रक्तशृङ्गीति तद्विषम्।
शुष्कार्द्रवत्सकिञ्जल्कं मन्ये तत्केसर विदुः॥ ३२॥
श्वदंष्ट्रारूपसस्थाना यमदंष्ट्रेति सोच्यते।
रसायने धातुवादे विषवादे क्वचित्क्वचित्।
दशैतानि प्रयुज्यन्ते न भैषज्ये रसायने॥ ३३॥

अथ कैश्चिन्नव भेदा उक्तास्ते यथा—

वत्सनाभः सहारिद्रः सक्तुकश्च प्रदीपनः।
सौराष्ट्रिकः शृङ्गिकश्च कालकूटस्तथैव च॥ ३४॥
हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव।
पलाशपत्रवत्पत्रैस्तद्बीजसदृशैः फलैः॥ ३५॥
स्थूलः कन्दो भवेत्तस्य प्रभावस्तु महान् स्मृतः।
सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा॥ ३६॥
यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः।
वर्णतो लोहितो यः स्याद्बर्हिमान् दहनप्रभः॥ ३७॥
महादाहकरो घ्राणात्कथितः स प्रदीपनः।
वर्णतः कपिलो यत्स्यात्तथा भवति सारकः।
ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले॥ ३८॥

शेषाः पूर्वमुक्ता एव। अथैषामुत्पत्तिस्थानानि—वत्सनाभः पर्वतक्षोणीषूत्पद्यते, हारिद्रो हरिद्राकक्षेषु, सक्तुकः पर्वतदेशे, प्रदीपनः समकक्षेषु, सौराष्ट्रिकः सुराष्ट्रदेशे, शृङ्गिकः कपिलेषु नदीकक्षेषु, कालकूटोऽहिच्छत्रादौ, हालाहलः किष्किन्धादौ, ब्रह्मपुत्रः ब्रह्मनाम कश्चन पर्वतप्रदेशस्तस्य कक्षेषु॥

अथैषां वर्णाः—

ब्राह्मण पाण्डुरविषं क्षत्रिय रक्तवर्णकम्।
वैश्य पीतप्रभ शूद्रं कृष्णवर्ण विनिन्दितम्॥ ३९॥

ब्राह्मणं दीयते रोगे क्षत्रियं विषभक्षणे ।
वैश्यं व्याधिषु सर्वेषु सर्पदष्टाय शूद्रकम् ॥ ४० ॥

अथ विषगुणाः—

विषं रसायनं बल्यं वातश्लेष्मविकारनुत् ।
कटुतिक्तकषायं च मदकारि सुखप्रदम् ॥ ४१ ॥
व्यवायि शीतनुद्ग्राहि कुष्ठवातास्रनाशनम् ।
अग्निमान्द्यं श्वासकासं प्लीहोदरभगन्दरान् ।
गुल्मपाण्डुव्रणार्शांसि नाशयेद्विधिसेवितम् ॥ ४२ ॥

अन्यत्रापि—

विषं प्राणहरं प्रोक्तं व्यवायि च विकाशि च ।
आग्नेयं वातकफहृद्योगवाहि मदावहम् ॥ ४३ ॥
तदेव युक्तियुक्तं तु प्राणदायि रसायनम् ।
पथ्याशिना त्रिदोषघ्नं बृंहणं वीर्यवर्धनम् ॥ ४४ ॥

व्यवायि सकलकायं व्याप्य पाकगमनशील, विकाशि ओजःशोषणपूर्वकसंधिबन्धशिथिलीकरणशील, आग्नेयं अधिकाग्न्यंशं, योगवाहि सङ्गिगुणग्राहक, मदावह तमोगुणाधिक्येन बुद्धिविध्वंसकम् । अथ विषशोधनम्—

ये दुर्गुणा विषेऽशुद्धे ते स्युर्हीना विशोधिते ।
तस्माद्विषं प्रयोगेषु शोधितं योजयेद्भिषक् ॥ ४५ ॥

यथा—

उद्धरेत्फलपाके तु नवं स्निग्धं घनं गुरु ।
अव्यावृतं विषहरैर्वातादिभिरशोषितम् ॥ ४६ ॥

विषहरैर्मयूरमण्यादिभिः ॥

विषभागाश्चणकवत्स्थूलान् कृत्वा तु भाजने ।
तत्र गोमूत्रकं क्षिप्त्वा प्रत्यहं नित्यनूतनम् ॥ ४७ ॥

शोषयेत्रिदिनादूर्ध्वं धृत्वा तीव्रातपे ततः।
प्रयोगेषु प्रयुञ्जीत भागमानेन तद्विषम् ॥ ४८ ॥

इय शुद्धिः ग्रीष्मर्त्वादावुचिता, तत्र तीव्रातपसद्भावात् ॥

रक्तसर्षपतैलेन लिप्ते वाससि धारयेत्।
विषं शुद्धं प्रयत्नेन नान्यत्र गुणहानितः ॥ ४९ ॥

अथ तीव्रातपाभावे प्रकारान्तरेण शोधनम्—

विषभागाश्चणकवत्स्थूलान् कृत्वा तु स्वेदयेत्।
गोदुग्धे घटिकाः पञ्च शुद्धिमायाति तद्विषम् ॥ ५० ॥
न प्रोक्तं शोधनं यस्य विषस्योपविषस्य वा।
गोदुग्धे स्वेदनं तस्य कर्तव्यं शुद्धिकारकम् ॥ ५१ ॥

योगतरङ्गिण्याम्—

विषं तु खण्डशः कृत्वा वस्त्रखण्डेन बन्धयेत्।
गोमूत्रमध्ये निक्षिप्य स्थापयेदातपे त्र्यहम् ॥ ५२ ॥
गोमूत्रं तु प्रदातव्यं प्रत्यहं नूतनं बुधैः।
त्र्यहेऽतीते तदुद्धृत्य शोषयेन्मृदु पेषयेत्।
शुध्यत्येवं विषं सेवायोग्यं भवति रोगजित् ॥ ५३ ॥

अथान्यः प्रकारः—

खण्डीकृत्य विषं वस्त्रपरिबद्धं तु दोलया।
अजापयसि संस्विन्नं यामतः शुद्धिमाप्नुयात् ॥ ५४ ॥
क्षीराभावे ह्यजायास्तु गव्यक्षीरेण शोधयेत्।
जायते दोषनिर्मुक्तं विषं योगेषु योजयेत् ॥ ५५ ॥

अथान्यः प्रकारः—

विषग्रन्थिं मले न्यस्य माहिषे दृढमुद्रितम्।
करीषाग्नौ पचेद्यामं वस्त्रपूतं विषं शुचि ॥ ५६ ॥

इति विषशुद्धिः ॥

समटङ्कणसंपिष्टं तद्विषं मृतमुच्यते ।
योजयेत्सर्वरोगेषु न विकारं करोति च ॥ ५७ ॥

अन्यमतम्—

तुल्येन टङ्कणेनैव द्विगुणेनोषणेन च ।
विषं संयोजितं शुद्धं मृत भवति सर्वथा ॥ ५८ ॥

इति विषकल्पार्थं विषमारणम् । अथ विषसेवा—

नानारसौषधैर्ये तु दुष्टा यान्तीह नो गदाः ।
ते नश्यन्ति विषे दत्ते शीघ्रं वातकफोद्भवाः ॥ ५९ ॥
शरद्ग्रीष्मवसन्तेषु वर्षासु च न दापयेत् ।
हेमन्तशिशिरर्तौ तु विधिना मात्रयाऽर्पयेत् ॥ ६० ॥
चतुर्मासैर्हरेद्रोगान् कुष्ठलूतादिकानपि ।
अशीतिर्यस्य वर्षाणि वसुवर्षाणि यस्य वा ॥ ६१ ॥
विषं तस्मै न दातव्यं दत्त चेद्रोगकारकम् ।
दातव्यं सर्वरोगेषु घृताशिनि हिताशिनि ॥ ६२ ॥
क्षीराशिनि प्रयोक्तव्यं रसायनरते नरे ।
ब्रह्मचर्यप्रधानं हि विषकल्पं समाचरेत् ।
पथ्यैः स्वस्थमना भूत्वा तदा सिद्धिर्न सशयः ॥ ६३ ॥

अथ विषानधिकारिणः—

न क्रोधिते न पित्तार्ते न क्लीबे राजयक्ष्मिणि ।
क्षुत्तृष्णाश्रमकर्माध्वसेविनि क्षयरोगिणि ॥ ६४ ॥
गर्भिण्या बालवृद्धेषु न विषं राजमन्दिरे । *
न दातव्यं न भोक्तव्यं विषं वादे कदाचन ॥ ६५ ॥
आचार्येण तु भोक्तव्यं शिष्यप्रत्ययकारकम् ।
विषं शुद्धं हि तदपि मात्रया नान्यथा भजेत् ॥ ६६ ॥
सर्वरोगोपशमनं दृष्टिपुष्टिकर विषम् ।
विधिना मात्रया काले भवेत्पथ्याशिना नृणाम् ॥ ६७ ॥

अथ विषमात्राकथनम्—

यवाष्टकं भवेद्यावदभ्यस्तं तिलमात्रया।
सर्वरोगहरं नृणा जायते शोधितं विषम् ॥ ६८ ॥

मतान्तरम्—

प्रथमे सार्षपी मात्रा द्वितीये सर्षपद्वयम्।
तृतीये च चतुर्थे च पञ्चमे दिवसे तथा ॥ ६९ ॥
षष्ठे च सप्तमे चैव क्रमवृद्ध्या विवर्धयेत्।
सप्तसर्षपमात्रेण प्रथमं सप्तकं नयेत् ॥ ७० ॥
क्रमहान्या तथा देयं द्वितीये सप्तके विषम्।
यवमात्रं विषं देयं तृतीये सप्तके क्रमात् ॥ ७१ ॥
वृद्ध्या हान्या प्रदातव्य चतुर्थे सप्तके तथा।
एवं सात्म्ये समायाते परा मात्रा भिषग्वरः ॥ ७२ ॥
स्थिरीकुर्याद्यथेच्छं तु ततस्त्यागं तु कारयेत्।
सेवनक्रमहान्याऽयं विषकल्प इतीरितः ॥ ७३ ॥
यवमात्रं ग्रसेत्स्वच्छो गुञ्जामात्रं तु कुष्ठवान्।
एवं यवाष्टपर्यन्तं परा मात्राऽधिका नहि ॥ ७४ ॥

अथ विषे पथ्यानि—

घृतं क्षीरं सिता क्षौद्र गोधूमास्तण्डुलान्यवान्।
मरिचं सैन्धव द्राक्षां मधुर पानकं हिमम् ॥ ७५ ॥
ब्रह्मचर्यं हिमं देशं हिमं काल हिमं जलम्।
विषस्य सेवको मर्त्यो भजेदतिविचक्षणः ॥ ७६ ॥

अथ विषपरीक्षा—

मात्राधिक यदा मर्त्यः प्रमादाद्भक्षयेद्विषम्।
अष्टौ वेगास्तदा तेन जायन्ते तस्य देहिनः ॥ ७७ ॥
प्रशमः प्रथमे वेगे द्वितीये वेपथुर्भवेत्।
वेगे तृतीये दाहः स्याच्चतुर्थे पतन भुवि ॥ ७८ ॥

फेनं वमेत्पञ्चमे तु षष्ठे वैकल्यमेव च ।
जडता सप्तमे वेगे मरणं चाष्टमे भवेत् ॥ ७९ ॥
विषवेगानिति ज्ञात्वा मन्त्रद्रव्यैर्विनाशयेत् ।
यावन्नष्टमवेगं तु संप्राप्नोति हि मानवः ॥ ८० ॥
अतिमात्रं यदा भुक्तं वमनं तस्य कारयेत् ।
अजादुग्ध ददेत्तावद्यावद्भ्रान्तिर्न जायते ॥ ८१ ॥
अजादुग्धं यदा कोष्ठे स्थिरीभवति देहिनः ।
विषवेगं तदोत्तीर्णं जानीयात्कुशलो भिषक् ॥ ८२ ॥

तदा जीर्णमिति क्वचित्पाठः ॥

विषं हन्याद्रसः पीतो रजनीमेघनादयोः ।
सर्पाक्षी टङ्कणं वाऽपि घृतेन विषहृत्परम् ॥ ८३ ॥

चत्वारो योगाः—

पुत्रजीवकमज्जा वा पीता निम्बुकवारिणा ।
विषवेगं निहन्त्येव वृष्टिर्दावानलं यथा ॥ ८४ ॥
गोघृतपीता हरति विष गरल च वन्ध्यकर्कोटी ।
सकलविषोपशमनी त्रिमूली सुरभिजिह्वा च ॥ ८५ ॥
अतिमात्र यदा भुक्तं तदाऽऽज्यं टङ्कण पिबेत् ।
विष सवेगं तेनाशु नाशमाप्नोति निश्चितम् ॥ ८६ ॥

वाग्भटः—

आदौ वान्तविरिक्तस्य हरिद्रे कटभी गुडम् ।
सिन्धुवारकनिष्पावबाष्पिकाशतपर्विका- ॥ ८७ ॥
तन्दुलीयकमूलानि कुकुटाण्डमवल्गुजम् ।
नावनाञ्जनपानेषु योजयेद्विषशान्तये ॥ ८८ ॥
विषभुक्ताय दद्याच्च शुद्धार्योर्ध्वमधस्तथा ।
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ॥ ८९ ॥

शुद्धे हृदि ततः शाण हेमचूर्ण च दापयेत् ।
न सज्जते हेमपाङ्के पद्मपत्रेऽम्बुवद्विषम् ॥ ९० ॥
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ।
साधकाना हितार्थाय सदाशिवमुखोद्गतम् ॥ ९१ ॥
क्षिप्र सर्वविषघ्नं च मन्त्र वै प्रवदाम्यहम् ।

ॐ नमो भगवति श्रीघोणे हर २ दर २ पर २ वर २ वध २ लर २ ली २ हर २ भां २ सर २ श २ क्षव २ क्षी २ ह्री २ भगवति श्रीघोणे यः ३ सः ३ वर २ रं सं ४ खण्डावररूपे ह्री ३ वर विहङ्गम मानुषयोगक्षेम वद शेखरिरखः स्वाहा इति मन्त्र. ।

विद्यायाः स्मृतिमात्रेण नश्यन्ते गुह्यकादयः ।
सप्तजप्तेन तोयेन प्रोक्षयेद्विषदूषितम् ॥ ९२ ॥
उत्तिष्ठति स वेगेन शिखाबन्धेन धारयेत् ।
त्रिमन्त्रितेन शङ्खेन दुन्दुभि वादयेद्यदि ॥ ९३ ॥
देशान्तरस्थ शब्देन निर्विषं कुरुते क्षणात् ।
विषं दृष्ट्वा यदा मन्त्री मन्त्रमावर्तयेत्सकृत् ॥ ९४ ॥
यान्ति निर्विषतां दृष्ट्वा अपि भारशतानि च ।
अथापरं मनुं वक्ष्ये साधकाना हिताय वै ।
येन निर्विषतामेति सर्पादिविषपीडितः ॥ ९५ ॥

ॐ नमो प्रचण्डगरुडाय पक्षिराजाय विष्णुवाहनाय विनतासुताय हे गरुड २ काश्यपसुत २ वैनतेय २ तार्क्ष्यस्वर्णवज्रचञ्चुवज्रतुण्डवज्रनखप्रहरणाय अनन्तवासुकितक्षककर्कोटकपद्ममहापद्मशङ्खपालकुलिकजयविजय अष्टमहानागकाल उच्चाटनी मूषकविषप्रहरणाय हन २ धुन २ शीघ्रं कम्प २ आवेश २ ठः ठः रहे श्रीगरुडाय नमः । इति ॥

मन्त्रेणानेन मन्त्रज्ञो जलं चुलकमात्रकम् ।
सप्तवाराभिजप्तं तु पाययेद्गतचेतनम् ॥ ९६ ॥
सर्पादिविषवेगेन सद्यो निर्विषमाप्नुयात् ।
त्रिवारमेव पानीयं दातव्यं न पिबेद्यदि ॥ ९७ ॥
मुखमध्ये तदा सेकाः कर्तव्यास्तज्जलस्य हि ।
अथवा मस्तके तस्य तर्जन्या ताडयेद्बुधः ।
त्रिवार मन्त्रपूर्वं तु निर्विषो भवति क्षणात् ॥ ९८ ॥

अथ वृश्चिकविषहरणमन्त्रः—

ॐ कालो विछु कतरीयालो सोनानी चाँच रूपानो पन्नोरो बिछू उतरे तो उतारु न तो गरुडमो हंकारुं आवेगो मोर खावेगो तोड बिछू विनरे तो हाक हलोला करे मेरी भक्ति गुरुकी शक्ति फुरो मन्त्र ईश्वरोवाच ॥

मन्त्रेणानेन मन्त्रज्ञो भूत्या करगृहीतया ।
मार्जयन्मन्त्रमुच्चार्य सप्तकृत्वा त्रिवारकम् ॥ ९९ ॥
सद्यो निर्विषता कुर्यान्नरं वृश्चिकदंशितम् ।
बर्हिपिच्छादिना वाऽपि मार्जयन्नाशयेद्विषम् ॥ १०० ॥

अथापरो वृश्चिकविषहरो मन्त्रः–ॐ नमो पुनपुरो ॥

मार्जयन्मुखवातेन मन्त्रेणानेन मन्त्रवित् ।
तिस्रो रेखाः प्रकुर्यात्तु सरला भुवि चात्मनः ॥ १०१ ॥
सन्मुखास्तासु मन्त्रेण रेखैका तिर्यगायताम् ।
प्रकुर्वन्निर्विषीकुर्यान्मन्त्रावृत्त्या मुहुर्मुहुः ॥ १०२ ॥

मुहुर्मुहुरिति २१ वार, अनुभूत मन्त्रद्वयमपि । अथोपविषाणि—

अर्कसेहुण्डधत्तूरलाङ्गलीकरवीरकाः ।
गुञ्जाहिफेनावित्येताः सप्तोपविषजातयः ॥ १०३ ॥

एतैर्विमर्दितः सूतश्छिन्नपक्षः प्रजायते ।
मुखं च जायते तस्य धातूंश्च ग्रसते क्षणात् ॥ १०४ ॥
अर्कसेहुण्डयोर्दुग्धमितराणां जटा भवेत् ।
रसः प्रयोज्यो योगेषु यद्वा पञ्चाङ्गजो रसः ॥ १०५ ॥

मतान्तरम्—

अर्कस्नुग्लाङ्गलीगुञ्जाहयारिविषमुष्टयः ।
आफेनोन्मत्तजेपाला नवोपविषजातयः ॥ १०६ ॥

भङ्गा तु अनिश्चितैव, मासगणे अजावीवत्[1]। अथोपविषशुद्धिः—

लाङ्गली शुद्धिमायाति दिनं गोमूत्रसंस्थिता ।

इति लाङ्गलीशुद्धिः ।

गुञ्जा काञ्जिकसंस्विन्ना प्रहरं शुद्धिमृच्छति ।

इति गुञ्जाशुद्धिः ।

किंचिदाज्येन संभृष्टो विषमुष्टिर्विशुध्यति ॥ १०७ ॥

इति विषमुष्टिशुद्धिः ।

जेपालं रहितं त्वगङ्कुररसज्ञाभिर्मले माहिषे
निक्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे स वासार्दितम् ।
लिप्तं नूतनखर्परेषु विगतस्नेहं रजःसंनिभं
निम्बूकाम्बुविभावित च बहुशः शुद्धं गुणाढ्यं भवेत् ॥

इति जेपालशुद्धिः ।

धत्तूरबीजं गोमूत्रे चतुर्यामोषितं पुनः ।
कण्डितं निस्तुषं कृत्वा शुद्धं योगेषु योजयेत् ॥ १०९ ॥

इति धत्तूरबीजशुद्धिः ।

अहिफेनं शृङ्गवेररसैर्भाव्य त्रिसप्तधा ।
शुद्ध्यत्युक्तेषु योगेषु योजयेत्तद्विधानतः ॥ ११० ॥

इत्यहिफेनशुद्धिः ।

---

[1] यदाह चरकः,—"योनावजाविके मिश्रगोचरत्वादनिश्चिते"—इति ।

बब्बूलत्वक्कषायेण भङ्गां संस्वेद्य शोषयेत् ।
गोदुग्धभावनां दत्त्वा शुष्कां सर्वत्र योजयेत् ॥ १११ ॥

इति भङ्गाशुद्धिः ।

अथ विषतैलम्—

गृह्णीयात्काचयन्त्रेण विषस्यागरुसत्त्ववत् ।
तैलं तेन रसो मर्द्यः क्षुत्कारी स महान्भवेत् ॥ ११२ ॥
एवं धत्तूरबीजादेस्तैलं ग्राह्यं विधानतः ।
योगे सर्वत्र युञ्जीत प्रोक्तमानेन नान्यथा ॥ ११३ ॥

अथ विषवज्रपातः—

रङ्ग विषं टङ्कणमूषण च तुत्थं समांशं कुरु देवदाल्याः ।
रसेन पिष्टो विषवज्रपातो रसो भवेत्सर्वविषैकहन्ता ॥ ११४॥
निष्कोऽस्य संजीवयति प्रयुक्तो नृमूत्रयोगेन च सर्वथैव ।
जटाविषेणाकुलितं तथाऽन्यैर्दुष्टैर्विषैर्घूर्णितमातुर च ॥ ११५ ॥

रङ्गं वङ्गभस्म । इति विषवज्रपातो रसः । अथ लवणभेदी सुधानिधिः—

पिष्टं पांशुपटुप्रगाढममल वज्र्यम्बुना चैकशः
सूतं धातुयुतं खटीकवलितं तं संपुटे रोधयेत् ।
अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्नि हठा-
च्छुभ्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः॥११६॥

तद्वल्लद्वितय लवङ्गसहितं प्रातः प्रभुक्तं च यै-
रूर्ध्वं रेचयति त्रियाममसकृत्पेयं जलं शीतलम् ।
एतद्धन्ति च वत्सरावधि विषं षाण्मासिकं मासिकं
शैलोत्थं गरलं मृगेन्द्रकुटिलोद्भूतं च तात्कालिकम् ॥

पांशुपटु खारीलवणम् । वज्र्यम्बुना वज्रीदुग्धेन, चैकशः सूत च पिष्टम् । मृगेन्द्रकुटिलोद्भूतं सिहश्मश्रुभक्षणजनि-

तम्। रसकर्पूरवदस्य प्रक्रिया। इति सकलविषघ्नो लवणभेदी सुधानिधिरसः ॥

अथ क्षारकल्पना—

क्षारवृक्षस्य काष्ठानि शुष्काण्यग्नौ प्रदीपयेत्।
नीत्वा तद्भस्म मृत्पात्रे क्षिप्त्वा नीरे चतुर्गुणे ॥ ११८ ॥
विमर्द्य धारयेद्रात्रौ प्रातरच्छ जलं नयेत्।
तन्नीरं क्राथयेद्वह्नौ यावत्सर्वं विशुष्यति ॥ ११९ ॥
ततः पात्रात्समुद्धृत्य क्षारो ग्राह्यः सितप्रभः।
चूर्णाभः प्रतिसार्यः स्यात् पेयः स्यात्क्राथवत्स्थितः।
इति क्षारद्वयं धीमान्युक्तकार्येषु योजयेत् ॥ १२० ॥

इति क्षारकल्पना।

इत्यायुर्वेदप्रकाशे श्रीमदुपाध्यायसारस्वतकुलावतसकाशीनिवासिश्रीमाधव-विरचिते विषोपविषादिसाधनाध्याय समाप्त ॥

समाप्तोऽयमायुर्वेदप्रकाश ।

# आयुर्वेदप्रकाशे प्रमाणतयोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि ।

रसपद्धति[1] ४–१९ इत्यादौ ।

वाग्भट[2] ( रसवाग्भट ) ४–२४ इत्यादौ ।

रसरत्नाकर[3] ८–२२ इत्यादौ ।

भास्कर १३–२ इति ।

रसचिन्तामणि[4] १३–१६ इत्यादौ ।

महेश्वर[5] १४–५ इत्यादौ ।

शिवागम १४–२६ इत्यादौ ।

रसार्णवतन्त्र १६–१४ इत्यादौ ।

बृहद्वशिष्ठपुराण १७–१२ इति ।

---

१ अय ग्रन्थ श्रीबिन्दुपण्डितविरचित, तथाच तद्ग्रन्थस्यारम्भश्लोक ,— "नत्वा निष्कपट निरञ्जनधिया निर्विघ्नमीशप्रियामायुर्वेदविदा मुदे सुभिषजामेषा मया बिन्दुना । ग्रन्थेभ्य परिगृह्य सारमखिल सूत्रैश्चिकित्सासखीवृक्षेभ्य स्रगिव प्रसूननिचयै सग्रथ्यते पद्धति ॥" इति । रसपद्धत्युपरि महादेवपण्डितविरचिता टीकाऽपि वर्तते । सटीकाया रसपद्धत्या एक हस्तलिखितपुस्तक श्रीनासिकक्षेत्र निवासिना मदीयपरमसुहृदा वैद्यवर्याणा **'कृष्णशास्त्री देवधर'** इत्येतेषा सकाशाल्लब्ध, आयुर्वेदप्रकाशसशोधने चैतत्पुस्तकस्य महानुपयोगो जात ।

२ अत्र वाग्भटशब्देन रसरत्नसमुच्चयकर्ता रसवाग्भट एवाभिप्रेत, नतु अष्टाङ्गहृदयतन्त्रकर्ता वाग्भट । रसरत्नसमुच्चयकर्तार अग्रे बहुषु स्थलेषु **रस-वाग्भट** इति नाम्ना स्वयमेव निर्दिशति माधव । यथा ५९ पृष्ठे, ३ पङ्क्त्याम् ।

३ श्रीनित्यनाथसिद्धविरचितोऽय ग्रन्थ रसखण्ड–रसेन्द्रखण्ड–वादखण्ड–रसायनखण्ड–मन्त्रखण्डाख्यै पञ्चभि खण्डैर्विभक्त । तेषु रसखण्डो रसेन्द्रखण्डश्च कलकत्तानगरे मुम्बय्या च मुद्रित , रसायनखण्डस्तु आयुर्वेदीयग्रन्थमालाया मुद्रितोऽस्ति ।

४ अय श्रीरामचन्द्रगुहविरचितो रसेन्द्रचिन्तामणिरेव ज्ञेय ।

५ अत्र प्रमाणतयोपन्यस्ता श्लोका रसार्णवतन्त्रे ११ पटले उपलभ्यन्ते ।

रसराजलक्ष्मी[१] १९–१८ इत्यादौ ।
शार्ङ्गधर २२–८ इत्यादौ ।
त्रिविक्रम २३–२१ इति ।
सिद्धलक्ष्मीश्वरतन्त्र २८–११ इत्यादौ ।
भगवद्गोविन्दपादा[२] ३१–२१ इत्यादौ ।
रसचिन्तामणि[३] ४९–१८ इति ।
आत्रेय ६०–११ ।
रसमञ्जरी ७९–१२ ।
वार्तिककार[४] ७९–२२ ।
भावप्रकाश ८९–८३ इत्यादौ ।
लघुयोगतरङ्गिणी ८९–९ इत्यादौ ।
राजनिघण्टु १०७–५ इत्यादौ ।
वाग्भट ११२–१५ इत्यादौ ।
रामराज १३७–१९ इति ।
भालुकि १५२–२१ इति ।
हारीत १५८–१० इति ।
अग्निवेश १५८–१९ इति ।
विष्णुधर्मोत्तरपुराणम् १६२–२१ इति ।
गौरीमत १२४–१ इति ।

---

१ महादेवतनयविष्णुपण्डितविरचितोऽय ग्रन्थ ।

२ भगवद्गोविन्दपादाचार्यविरचितो रसहृदयतन्त्राख्यो ग्रन्थ आयुर्वेदीय ग्रन्थमालाया मुद्रितोऽस्ति ।

३ अय श्रीअनन्तदेवसूरिविरचित, मुम्बय्या वेकटेश्वरयन्त्रालये मुद्रितोऽस्ति ।

४ अत्र प्रमाणतयोपन्यस्त श्लोक श्रीसोमदेवविरचितरसेन्द्रचूडामणौ ५ अध्याये वर्तते ।

# आयुर्वेदप्रकाशपाठसंशोधनम् ।

| अपपाठ | सुपाठ | पृ० | प |
|---|---|---|---|
| प्रजायते । | प्रजायते ॥ ५६ ॥ | ७ | २ |
| रसेषु ॥ ५६ ॥ | रसेषु ॥ | ,, | २ |
| मलदोषापनुत्त्युर्थ | मलदोषापनुत्त्यथ | ,, | २ |
| लिप्त्वाऽधोभाण्डे | लिप्त्वा अधोभाण्डे | १० | |
| सन्धिलेप | सन्धिलेप | ,, | |
| सर्पाक्षी चिञ्चिका व ध्या° | सर्पाक्षीचिञ्चिकावन्ध्या° | १२ | १ |
| सर्वकुष्टहा | सर्वकुष्ठहा | १५ | |
| समूच्छर्य | समूच्छर्य | १६ | १ |
| सुताम्राङ्घ्रियुक् । | सुताम्राङ्घ्रियुक् | १९ | २ |
| १ 'वारसम्' क । | १ '°र्वा रसम्' क । | ,, | २ |
| सप्तधा । | सप्तधा | २१ | २ |
| गन्धमभावे | ग्राह्यमभावे | २८ | २ |
| दत्त्वा च वालुकामुपरि | दत्त्वा च वालुकामूर्ध्वं | २९ | २ |
| लोहभेकि सिद्धमते | सिद्धमते लोहभेकि | ३५ | १ |
| पाकाद्यग्निविपक्किमा | पाकादग्निविपक्किमा | ३८ | |
| केवलामारोटकमेव | केवलमारोटकमेव | ,, | १ |
| °कज्जलि° | कज्जली° | ३९ | १ |
| मूषामध्यगस्तिष्ठे° | मुखमध्यगतस्तिष्ठ° | ४१ | २ |
| कूप्या | कूप्या | ४६ | |
| सा यन्त्रे | ता यन्त्रे | ,, | |
| हिम | हिमा | ,, | |
| पारद दशटङ्क स्याद्दशटङ्क च गन्धकम् । | पारदो दशटङ्क स्याद्दशटङ्कश्च गन्धक । | ४९ | २ |
| ताश्च तान्नाशयेच्छ्रेष्ठ | तास्ताश्च नाशयेच्छ्रेष्ठ | ५० | |
| रसायन त्रिदोषघ्नो | रसायनत्रिदोषघ्नो | ५२ | १ |
| शिफावारिपिष्ट | शिफा वारिपिष्टा | ,, | २ |
| खेद | खेदो | ५५ | १ |
| कुलत्थ | कुलत्थान् | ५९ | १ |
| चित्रा गिरिनाभव | चित्रागिरिजाभव | ६० | २ |

| अपपाठ | सुपाठ | पृ० | प० |
|---|---|---|---|
| असिताया | असिताया | ६१ | ३ |
| २ 'अक्रुष्णाया' ग । | २ 'अक्रुष्णाया' ग | ,, | २५ |
| देहशुद्धिं | देहशुद्धि | ७२ | १४ |
| °प्रयोगेण | °प्रयोगेन | ७३ | १५ |
| निषेचयेत् | निषेवयेत् | ८४ | ३ |
| दृष्टे | नष्टे | ९२ | २१ |
| °कुलित्था चूर्ण | कुलित्थाचूर्ण | ९६ | १५ |
| °शुद्धि | °शुद्धय | ,, | २१ |
| रसक तुत्थभेद | रसकस्तुत्थभेद | १०० | १४ |
| त्रिधाऽपरा | तथाऽपरा | १०२ | १७ |
| सार्धनिष्काभरा | सार्वनिष्कमिता | ,, | २६ |
| °ब्रघ्नार्शोरक्तग्रन्यि | °ब्रघ्नार्शो रक्तग्रन्थि | १०४ | ५ |
| रेची | रेकी | १०७ | ६ |
| विरेची | विरेकी | ,, | १० |
| बिड्° | बिड° | ,, | २४ |
| कम्पिल्लाश्वपलो | कम्पिल्लश्वपलो | १०८ | १५ |
| व्यवहाराभावत किं च | अभावाद्व्यवहारस्य किं च | | |
| श्वेतकुष्ठहर हि तत् | किलासनाशि तत् | ११८ | २० |
| रससयुक्त | रसरहित | १२३ | ६ |
| यवासा | यवसाह्वा | १२६ | १९ |
| प्रोक्ताव्यवस्था | प्रोक्ता व्यवस्था | १३२ | १२ |
| अथलोहदोषा | अथ लोहदोषा | १३५ | ८ |
| सोमामृताभिदमिद | सोमामृताभिवमिद | १३८ | २८ |
| सोमामृताभिद | सोमामृताभिव | ,, | २५ |
| तयो रम्ब्बा | तयोरम्ब्वा | १४९ | ५ |
| गैरेय° | शैलेय° | १५० | १३ |
| वङ्गवल्लवते | वङ्गवद्रवते | १६१ | १८ |
| भूमि | विज्ञान | १६५ | ११ |
| पीतारुण° | नीलारुण° | १८० | २६ |